# दत्तकमीमांसा दत्तकचन्द्रिका च ।



गवर्णमेण्टसंस्कृतविद्यालयस्य भूतपूर्व्वस्मृतिशास्त्राध्यापक




श्रीभरतचन्द्रशिरोमणिकृत-

बालबोधिनी टीकासहिता

श्रीयज्ञेश्वरभट्टाचार्य्येण

पुनर्मुद्रिता सम्वर्द्धिता च ।

---

# DATTAKA MIMANSA

AND

# DATTAKA CHANDRIKA

WITH A COMPLETE COMMENTARY

BY

PUNDIT BHARAT CHANDRA SIROMONI,

*The late Professor of H du-la o Sanskrit College*

**SECOND EDITION.**

REPUBLISHED BY

YOGNESWARA BHATTACHARYA,

CALCUTTA

PRINTED BY D. N. NANDI AT THE VALMIKI PRESS,
ROSAD CHOWDHURY'S LANE.

# दत्तकमीमांसा।



श्रीधर्म्माधिकारि-रामपण्डितात्मज-

श्रीनन्दपण्डित विरचिता


गवर्णमेण्ट संस्कृतविद्यालयस्य भूतपूर्व्वस्मृतिशास्त्राध्यापक

श्रीभरतचन्द्रशिरोमणिभट्टाचार्य्यकृत-

बालविबोधिनी-टीकासहिता

श्रीयज्ञेश्वरभट्टाचार्य्येण

सम्पादिता पुनर्मुद्रिता च।


---


कलिकाताराजधान्यां

वाल्मीकियन्त्रे मुद्रिता।

शकाब्दाः १८०७।

# दत्तकमीमांसा।




बालविबोधनीटीकासहिता।

अभिवन्द्य जगद्वन्द्यपदद्वन्द्वविनायकम्।
पुत्रीकरणमीमांसां कुरुते नन्दपण्डितः॥

अतनुर्द्वेधा तनूर्देधत् धरणिं यः श्रमशोऽवहेलया।
प्रतिपालयति स्म राघवं तमजं नौमि विभुं बुभूत्सया॥
कृता दत्तकमीमांसाटीका बालविबोधनी।
भरतेन द्विजेनेयं यथामति सतां मुदे॥

ग्रन्थारम्भे विघ्नविघाताय देवतानामोच्चारणरूपं शिष्टपरम्पराचरितं मङ्गलमाचरन् अभिधेयप्रयोजनसम्बन्धांश्च प्रदर्शयन् पुत्रीकरणमीमांसामुद्दिशति अभिवन्द्येति। नाम्ना सङ्कीर्त्तनमुद्देशः, अत्राभिधेयः पुत्रीकरणं, प्रयोजनं पुत्रीकरणतत्त्वनिश्चयः। सच गौणं प्रयोजनं, सुखतद्धेतुदुःखाभावानां मुख्यप्रयोजनत्वात्। सम्बन्धश्च ग्रन्थाभिधेययोर्बोध्यबोधकभावलक्षणः ग्रन्थप्रयोजनयोः प्रयोज्यप्रयोजकभावलक्षणः अभिधेयप्रयोजनयोर्विषयविषयिभावलक्षणः। अनेन ग्रन्थादौ वक्तव्या अभिधेयप्रयोजनसम्बन्धा अभिहिताः। तथाचोक्तं ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते। ग्रन्थादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः इति। अत्र तृतीयचरणे सम्बन्धः साभिधेयश्च इति क्वचित् पाठः।

केन कीदृक् कदा कस्मै कस्मात् कः क्रियतां सुतः ।
विविच्य नोक्तं यत् पूर्वैस्तदशेषमिहोच्यते ॥

---

तेन चातार्थमित्यर्थशब्देन प्रयोजनार्थस्यापि लाभः, अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वित्यमरकोषात्। नचात्र युगपद्वृत्तिद्वयविरोधः। अन्योऽर्थस्तु संसृष्टीति याज्ञवल्क्यवचनव्याख्याने विज्ञानेश्वराचार्य्यैरन्यैरपि युगपद्वृत्तिद्वयस्याङ्गीकारात् तेषां मीमांसकसन्निबन्धृत्वेन तद्वाक्यस्यापि प्रामाण्यात्। वेदाः प्रमाणं स्मृतयः प्रमाणं धर्मार्थसंयुक्तं वचः प्रमाणमित्यादिस्मरणात्। 'धर्मार्थसंयुक्तवचः' मीमांसकसन्निबन्धृवाक्यं, आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतर इति मानवाच्च। 'अभिवन्द्य' नमस्कृत्य। जगद्वन्द्यं जगतां वन्दनीयं पदद्वन्द्वं यस्य स चासौ विनायकश्चेति तम्। 'पुत्रीकरण-मीमांसा' पुत्रीकरणस्य पुत्रप्रतिनिधिविधानस्य मीमांसा सदसद्विचारो निरूपणमिति यावत्। नन्दपण्डितस्तन्नामा विष्णुस्मृतिटीकाकारः कश्चित् सुधीः। ननु अहङ्करोमीति वक्तव्ये 'कुरुते नन्दपण्डित' इति आत्मनि परोक्षवन्निर्देशः कथमिति चेन्न आचार्य्याणामाहोपुरुषिकादोषपरीहाराय स्वाभिप्रायस्य परोक्षवन्निर्देशस्य प्रसिद्धेः।

ननु पूर्वाचार्य्यविरचितदत्तकादिविषयकनिबन्धाः सन्ति त एवादरणीयाः किमर्थमयमारम्भक्लेश इत्यत आह केनेति। केनाधिकारिणा अपुत्रेणैवेत्याद्युक्तेनापुत्रेण। 'कीदृक्' नैकपुत्रेणेत्याद्युक्तः। 'कदा' अपुत्रत्वे। 'कस्मै' नामसङ्कीर्तनाय पिण्डोदकक्रियायै च। 'कस्मात्' यस्मात्तस्मात्प्रयत्नतः। 'कः' ब्राह्मणानां सपिण्डेष्वित्याद्युक्तः। 'पूर्वैः' पूर्वपण्डितैः, अन्यत् सुगमम्। यदि च पूर्वनिबन्धाः सन्ति सन्तु, तेषु केनाधिकारिणा कश्च इत्यादि विविच्य नाभिहितं, मया त्विह विवेचनेनाभिधानमस्यतोऽयमारम्भः समादरणीय एवेति भावः।

तत्राहात्रिः। अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा।
पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात् प्रयत्नतः इति॥

"अपुत्रः" अजातपुत्रो मृतपुत्रो वा। अपुत्रो मृतपुत्रो वा, पुत्रार्थं समुपोष्य चेति शौनकीयात्। वन्ध्यो मृतप्रजो वापीति पाठान्तरम्। अपुत्रेणेति अपुत्रताया निमित्तताश्रवणात् पुत्राकरणे प्रत्यवायोऽवगम्यते। पुत्रोत्पादनविधेर्नित्यतया तल्लोपस्य प्रत्यवायनिमित्ततापर्य्यवसानात्, नापुत्रस्य लोकोऽस्तीति पुत्रसामान्याभाव एवालोकताश्रवणात् जायमानो वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् जायते ब्रह्मचर्य्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी चेत्यत्रापि पुत्रसामान्यस्यानृण्यहेतुताश्रवणाच्च।

अपुत्रेणेति। अत्रापुत्र इत्यस्य अजातपुत्रोमृतपुत्रेवेत्यर्थकत्वेन नञः प्रागभावध्वंसात्यन्ताभावरूपसंसर्गाभावबोधकत्वं फलितम्। तेन पुत्रप्रागभावसत्त्वेऽपि पुत्रीकरणं शास्त्रीयम्। अतएव सङ्क्षिप्ते प्रतिगृहीते औरस उत्पद्येत चतुर्थभागभागी स्याद्दत्तक इति वशिष्ठवचनात् दत्तकपुत्रपरिग्रहानन्तरमौरसपुत्रोत्पत्तिः सङ्गच्छते, सङ्गच्छते च वन्ध्याष्टमेऽधिवेत्तव्येत्यादिवत् अष्टवर्षावधि प्रतीक्षाभावमिति वक्ष्यमाणग्रन्थसन्दर्भ इति सुधीभिर्विभावनीयम्। वन्ध्य इति अजातपुत्र इत्यर्थः। अफलस्याप्यजातपुत्रत्वाविशेषात् पुत्रात्यन्ताभाववान् इत्यर्थकत्वे तु अजातपुत्रोमृतपुत्रेविविक्षितविरोधः स्यात्। प्रत्यवाय इति प्रत्यवायजनकीभूताभावप्रतियोगिनो नित्यत्वादिति भावः। जायमान इति गृहस्थः सम्पद्यमान इति द्वैतनिर्णयः। 'त्रिभिः' ऋषिदेवपितृभिरित्यर्थः। वस्तुतस्तु 'जायमानः' उपनीत इत्यर्थः, द्वितीये मौञ्जीबन्धन

अपुत्रेणैवेत्येवकारेण पुत्रवतो नाधिकारो बोधितः। अनेन "माता पिता वा दद्यातां यमद्भिः पुत्रमापदि" इत्यापत्पदमपि मानवीयं व्याख्यातम् व्याख्यातञ्चापरार्केणापि। तथा आपदि प्रतिग्रहीतुरपुत्रत्व इति। यद्वा आपदि दुर्भिक्षादौ आपद्ग्रहणादनापदि न देयो दातुरयं प्रतिषेध इति मिताक्षरा। तथा च कात्यायनः।

---

इति मनुवचनात् उपनीतस्यापि जायमानत्वाविशेषात् द्विज इति बोध्यम्। 'ऋषिभ्यः' ऋष्यृणेभ्यः। एवं पितृभ्यः देवेभ्यः मुच्यत इति शेषः। एष वेति पूर्वविवरणमिति केचित् अथवा श्रुत्यन्तरमिदम्।

पुत्रवत इति। औरसपुत्रेण पुत्रवत इत्यर्थः। पुत्रपदस्यौरसे मुख्यत्वेन तस्यैव प्रथमोपस्थितिकत्वात् लक्षणाया अयुक्तत्वात्। अतएव दत्तकसत्त्वेऽपि यद्यन्योदत्तकः परिगृह्यते तदासावपि सिध्यत्येव। एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेदित्याद्यर्थवादात्। तेन लोकेऽपि महाजनकर्तृकपुत्रद्वयपरिग्रहव्यवहारो दृश्यत इति। किञ्च तस्मिन् जाते सुते दत्ते इत्यस्य व्याख्यानावसरे सत्यौरसे परिगृहीतस्य न धनभाक्त्वमित्यर्थः। पुत्रोत्पत्तावौरसाभावस्यापि विशेषणत्वात्। तथा दत्ते यथाविधि परिगृहीते सति योऽकृतविधानकः पुत्रस्तयोश्च दत्तएव धनभाक् इति वक्ष्यमाणग्रन्थकारलिखनस्वरसेन तथार्थलाभादिति बोध्यम्। आपत्पदमिति आपद्गुपुत्रत्वमित्यर्थः। 'अपरार्केण' तन्नाम्ना निबन्धकारेण।

ननु माता पिता वा दद्यातामित्यत्र यथान्तविपरिणामेन उपस्थितयोरेव मातापित्रोरापदीत्यविवार्थे युज्यत इत्याह यद्वेति। दातुरयं प्रतिषेध इति। तथाच दुर्भिक्षादिकं विना पुत्रदाने दातुः प्रत्यवायमात्रं न दानासिद्धिः, विध्युल्लङ्घने प्रत्यवायस्यावश्यम्भावात्। प्रतिग्रहीतु

आपत्काले तु कर्त्तव्यं दानं विक्रय एव वा। अन्यथा न प्रकर्त्तव्यमिति शास्त्रविनिश्चय इति। मनुरपि। अपुत्रेण सुतः कार्य्यो यादृक् तादृक् प्रयत्नतः। पिण्डोदकक्रियाहेतोर्नामसङ्कीर्त्तनाय च। अपुत्रोऽनेन विधिना सुतां कुर्व्वीत पुत्रिकामिति॥

यत्तु विश्वामित्रादीनां पुत्रवतामपि देवरातादिपुत्रपरिग्रहलिङ्गदर्शनं तदपुत्रेणैवेत्यादिश्रुतिविरोधात् अजागर्त्तीभक्षणादिवन्न

---

पुनः प्रत्यर्पणे नास्तीति भावः। मातापित्रोर्दुर्भिक्षादिरूपायामापदि दाने प्रमाणमाह तथाचेति आपदिति। तथाच आपत्काल इत्यस्य दानं कर्त्तव्यमिति क्रियायाः कर्त्तृत्वेनोपस्थितेन दात्रा सहान्वयो युक्तो न त्वनुपस्थितेन प्रतिग्रहीत्रेति भावः। यादृक् तादृगिति तृतीयान्तमव्ययम्, प्रयत्नत इत्यस्य सामानाधिकरण्येनान्वयानुरोधात्। प्रयत्नत इति प्रयत्नसामान्योपादानेऽपि क्षेत्रजादीन् सुतानेतानित्येकादशपुत्रप्रतिनिधिश्रवणात् एकादशप्रयत्ना बोद्धव्याः। पिण्डोदकेति, मिलितानामेषां निमित्तत्वं न प्रत्येकं, तेन सर्वार्थमेकएव पुत्रीकार्य्य इत्यग्रे वक्ष्यति।

यत्त्विति, देवरातेति। अथ शुनःशेपो विश्वामित्रस्याङ्कमाससाद सहोवाच अजीगर्त्तः सौऽयं वशिष्ठऋषिः पुनर्मे पुत्रं देहीति, नेति होवाच विश्वामित्रो देवावामह्यमरासतेति, सहदेवरातो विश्वामित्र आसेति बह्वृच ब्राह्मणादिति शेषः। 'तदपुत्रेणेति' अपुत्रेणैव कर्त्तव्य इति स्मृत्यनुमितश्रुतिविरोधादित्यर्थः। 'अजागर्त्तीभक्षणादिवदिति' क्षुधार्त्तश्चात्तुमभ्यागाद्विश्वामित्रः श्वजाघनीमिति मनुवचनेनेति शेषः। तथाच तेषामृषित्वात् देवकल्पत्वाद्वा तदाचारो न पुरस्कार्य्यो नापि तिरस्कार्य्यः। तदुक्तं, कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा। नाचरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेदिति। नचेति।

श्रुत्यनुमापकमिति ध्येयम्। न च स्मार्त्ती श्रुतिः श्रौतस्य लिङ्गस्य न बाधिकेति वाच्यम्। नापुत्रस्य लोकोऽस्तीत्यादिमत्यक्षश्रुत्युपक्रमेण तस्या एव बलवत्त्वात्। अथापि स्मार्त्तश्रुतितः श्रौतलिङ्गबलवत्त्व एव श्रीमतामाग्रहातिशयश्चेत् तर्हि पुत्रानुज्ञया पुत्रवतोऽप्यस्तु पुत्रान्तरपरिग्रहाधिकारः। यन्न. पिता सञ्जानीते तस्मिंस्तिष्ठामहे वयम्। पुरस्तात् सर्वे कुर्महे त्वामन्वञ्चो वय स्मसीति श्रौतलिङ्गात्। नचेद् ज्येष्ठीकरणे लिङ्गं न पुत्रीकरण इति वाच्यम्। तस्य तदभावेनैवासिद्धेरित्यलं पल्लवितेन।

अपुत्रेणेति पुत्रपदं पौत्रप्रपौत्रयोरप्युपलक्षकम्। पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते। अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति पिष्टपमिति पौत्रादिना विशिष्टलोकप्रतिपादनेन नापुत्रस्य

---

'स्मार्त्ती श्रुति' अपुत्रेणैवेति स्मृत्यनुमिता श्रुतिरित्यर्थः। 'श्रौतस्य लिङ्गस्य' देवरातादिपुत्रप्रतिपादकश्रुत्युक्तस्य पुत्रवत पुत्रग्रहणलक्षणस्य लिङ्गस्येत्यर्थः। प्रत्यक्षश्रुतीति। 'श्रुत्युपक्रमेण' नापुत्रस्य लोकोऽस्तीति श्रुत्युपक्रमेण, तन्मूलकत्वेनेति यावत्। ननु देवरातादिपुत्रप्रतिपादक पठ्यमानश्रुते अपुत्रेणैवेति स्मृत्यनुमेयश्रुतेर्दुर्बलत्वाङ्गीकारे विश्वामित्र अजाघनीमित्यादिमनुस्मृतेर्वेदमूलकत्वाभावाशङ्कायां पुराण मानवो धर्मः साङ्गो वेदश्चिकित्सितमितिस्मृतिबाधापातात् पुत्रवतामस्तु पुत्रान्तरपरिग्रह इत्याह अथेति। प्रमाणं दर्शयति यन्न इति। 'संजानीते' अनुजानीते इत्यर्थः। धातूनामनेकार्थत्वात्। तस्मिन्निति पिब्ल्हतनियमे। तिष्ठामहे इति प्रतिज्ञायामात्मनेपदम्। 'पुरस्तात् कुर्महे' योगक्षेमकर ज्येष्ठं त्वा कुर्महे इत्यर्थः। 'अन्वञ्चः' अनुगता स्म। तस्येति ज्येष्ठीकरणस्येत्यर्थः। 'तदभावेन' पुत्रीकरणाभावेन।

लोकोऽस्तीत्यादलोकतापरिहारात। न च पिण्डोदकदानार्थं तत्करणमिति वाच्यम्। पुत्रः पौत्र प्रपौत्रश्च तद्वद्वा भ्रातृसन्ततिरित्यनेन तयोरेव तदधिकारावगमात्।

अपुत्रेणेति पुंस्त्वश्रवणात् न स्त्रिया अधिकार इति गम्यते। अतएव वशिष्ठ.। न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्त्तुरिति। अनेन विधवाया भर्त्रनुज्ञानासम्भवात् अनधिकारो गम्यते। न च सधवाया, स्वभर्त्रनुज्ञापेक्षापारतन्त्र्यात् न विधवाया इति वाच्यम्। स्त्रीसामान्योपादानेन पारतन्त्र्यस्य प्रयोजकत्वात्, अभावे ज्ञातयस्तेषामिति ज्ञातिपारतन्त्र्यस्य सद्भावाच्च।

तर्हि ज्ञात्यनुज्ञयैव तस्याः पुत्रीकरणमस्तिति चेन्न भर्त्तृपदस्योपलक्षणतापत्तेः प्रयोजनासिद्धेश्च। प्रयोजनन्तु भर्त्रनुज्ञानस्य।

---

असिद्धेरिति पुत्रीकरणाभावे सिद्धे ज्येष्ठीकरणस्याप्रसक्तेरिति भाव। तयोरेवेति एवकारोऽप्यर्थक। 'तयो' पौत्रप्रपौत्रयोरित्यर्थ। 'पुंस्त्वश्रवणादिति' पुंस्त्वस्य विधेयविशेषणत्वेन विवक्षितत्वादिति भाव। 'अनेनेति' भर्त्रनुज्ञानासम्भवेन भर्तृभावेनेति शेषः। भर्त्रनुज्ञानासम्भवादित्यनेन सति भर्त्तरि पूर्व्वं तदनुमतया अधिकारो भवत्येवेति बोध्यम। 'पारतन्त्र्यादिति' रक्षेत् कन्यां पिता विन्नां पतिः पुत्राश्च वार्द्धके। अभावे ज्ञातयस्तेषां न स्त्री स्वातन्त्र्यमर्हतीति याज्ञवल्क्यवचनादिति शेष। स्त्रीसामान्योपादानेन न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयादिति वचने इति शेष।

ननु अभावे ज्ञातयस्तेषामित्यनेन भर्त्तृभावे ज्ञातिपारतन्त्र्यस्यबोधनात् अन्यत्रानुज्ञानाद्भर्त्तुरित्यत्र भर्त्तृपदस्योपलक्षणता युज्यते इत्यात

स्त्रीकृतपरिग्रहेणापि भर्त्तृपुत्रत्वसिद्धिः । अतएव अपोढ़क्षेत्रज-कृत्रिमपुत्रिकापुत्रस्त्रीदारजासुरार्षोढ़जदक्षिणाजानां पित्रोश्चेति सत्याषाढ़सूत्रे स्त्रीदारजस्य गोत्रद्वयसम्बन्धोऽभिहितः । मातुरुत्तरं पितुः प्रथममिति सूत्रेणापि । पितृगोत्रसम्बन्धश्च पितुः पुत्रत्वेन । पुत्रत्वञ्च पित्रनुज्ञानेनैव न परिग्रहेण । तस्य तत्र स्त्रीकर्त्तृकत्वात् । 'ऊढ़ः' सहोढ़ः । 'स्त्रीदारजः' स्त्रीयाचितः, स्त्रीसत्ताकः । यज्ञेन दक्षिणात्वेन प्राप्तायां कन्यायां जातः 'दक्षिणाजः' । अन्ये प्रसिद्धाः इति शबरस्वामिनः ।

अत्र च स्त्रिया दारताभिधानेन दारी पुरुषो लभ्यते अन्यथा स्त्रीपरिगृहीतस्य तन्मात्रपुत्रत्वेन तद्भर्त्तृगोत्रसम्बन्धाभावात् तद्भर्त्तृक्रियायामनधिकारापातात् तद्विवाहादौ च पित्रभावेन पितृगोत्रा-

---

प्रयोगानासिद्धेश्चेति । 'भर्त्तृपुत्रत्वसिद्धिरिति' यतएव स्त्रीकृतपरिग्रहेण भर्त्तृपुत्रत्वसिद्धिरतएवेत्यर्थः । 'तस्येति' तस्य पुत्रपरिग्रहस्य । 'स्त्रीकर्त्तृकत्वात्' स्त्रीयाचकर्त्तृकत्वात् इत्यर्थः । 'स्त्रीसत्ताकः' भर्त्तुर्विप्रवासादिना स्त्रीमात्रसत्ताकः न तु पतिसत्ताकः । तथात्वे प्राधान्येन भर्त्तृकर्त्तृकत्वद्वयस्योचित्यात् स्त्रीकर्त्तृकपदस्यासङ्गतेरित्यर्थः । 'प्राप्तायां कन्यायां' पश्चादूढ़ायामिति शेषः । दक्षिणाज इति । अनेन दैवविवाह उक्तः, यज्ञे तु वितते सम्यक् ऋत्विजे कर्म्म कुर्वते । अलङ्कृत्य सुतादानं दैवं धर्म्मं प्रचक्षते इति मनुवचनात् । अतो दक्षिणाजस्य नातिरिक्तपुत्रत्वं, तस्य तावदौरसेऽन्तर्भावात् नास्ति पुत्रवादप्रसरणविरोध इति बोध्यम् । अन्ये इति क्षेत्रजादय इत्यर्थः ।

ननु स्त्रीदारजस्य स्त्रीमात्रकर्त्तृकत्वात् भर्त्तुर्व्यापाराभावेन कथं तत्पुत्रत्वसिद्धिरत आह अनेनेति । तथाच स्त्रीदारजेतिप्रयोगात् तदर्थ-

यनुल्लेखप्रसङ्गाच्च। यद्येवं तर्हि भर्त्तुरपि स्वयंत्वनुज्ञापेक्षा स्यात् प्रयोजनतौल्यादिति चेन्न। भर्तृप्राधान्यात् तत्परिग्रहेणैव स्त्रिया अपि तस्मिन् पुत्त्रत्वसिद्धेः भर्त्तृपरिगृहीतवस्त्वन्तरस्वत्ववत्। किञ्च व्याहृतिभिर्हुत्वा अदूरबान्धवं बन्धुसन्निकृष्टमेव प्रतिगृह्णीयादिति समानकर्त्तृकताबोधकक्त्वाप्रत्ययश्रवणात् होमकर्त्तुरेव प्रतिग्रहसिद्धेः स्त्रीणां होमानधिकारित्वात् प्रतिग्रहानधिकार इति वाचस्पतिः।

न च शौनकीये आचार्य्यवरणाम्नानात् तद्द्वारा होमसिद्धि-

लाभ इति भावः। 'अन्यथेति' श्राद्धे गोत्रसम्बन्धिनामेवाधिकार-दर्शनात् अतद्गोत्रायामनधिकारापातादित्यर्थः। नन्वस्तु अनधिकारः का क्षतिरित्यत आह तद्विवाहादाविति। तथाच मातृगोत्रकर्तृकग्रहणेऽपि मातुर्भर्त्तृगोत्रसम्बन्धं विना गोत्रान्तरसम्बन्धासम्भवात् मातृगोत्रसम्बन्धेऽपि भर्त्तृगोत्रप्राप्तेरविशेषात् अतिविरहेऽपि भर्त्तृपुत्त्रत्वेन भर्त्तृगोत्र-सम्बन्धाभावात् पितृपक्षस्यैव गोत्राद्युल्लेखस्य शास्त्रीयत्वात् न मातृपक्षया। अतो भर्त्तुः पुत्त्रत्वाभावेन पुत्त्रत्वेन तत्क्रियायामनधिकारप्रसङ्गः। सुतरां तस्य पितृभावेन विवाहादौ मातृनैरपेक्ष्येण पितृगोत्रा-द्यनुल्लेखप्रसङ्गश्च स्यात्। श्राद्धे फलभागिनां गोत्राद्युल्लेखदर्शनात् सद्दितरत्र तदुल्लेखाचारसमाचारविरोधादिति भावः। 'प्रयोजनतौ-ल्यादिति' पुत्त्रत्वसिद्धिलक्षणप्रयोजनसाम्यादित्यर्थः। 'भर्त्तृपरिगृही-तेति' दम्पत्योर्मध्यगं धनमिति वचनादिति भावः। स्त्रीणां सात-न्त्र्यानधिकारे वाचस्पतिसंवादं दर्शयति किञ्चेति। हुत्वेति क्त्वाश्रव-णात् होमानन्तरं प्रतिग्रह इति सिद्धम्। प्रथमं अदूरबान्धवं सन्नि-हितसपिण्डं तदभावे बन्धुसन्निकृष्टं सपिण्डसपिण्डमित्यर्थः।

"शौनकीये इति आचार्य्येति" आचार्य्योधर्मसंयुक्तं वैष्णवं वेद-

रिति वाच्यम्। होमसिद्धावपि प्रतिग्रहमन्त्रानधिकारेण प्रतिग्रहा-सिद्धेः। तदाह शौनकः। देवस्य त्वेति मन्त्रेण हस्ताभ्यां परिगृह्य च। अङ्गादङ्गेत्यृचं जप्त्वा आघ्राय शिशुमूर्द्धनीति। न चैवं शूद्राणामनधिकारप्रसङ्गः शूद्राणां शूद्रजातिष्विति व्यवस्थापकलिङ्गेन तदधिकारकल्पनात्। एतेन शूद्राणां होमप्रतिग्रहमन्त्रानधिकारेण पुत्रपरिग्रहानधिकार इति वदन् वाचस्पतिः परास्तः। विधवानां स्त्रीणान्तु यथाविनियोगमधिकारसमर्थनात् न पुत्रपरिग्रहाधिकार इति सिद्धम्। न चैवं सधवानामप्यनधिकारापत्तिः होममन्त्राद्यनधिकारादिति वाच्यम्। अन्यत्रानुज्ञानाद्भर्त्तुरिति प्रतिप्रसवेन प्रधानाधिकारसिद्धावधिकृताधिकारात् होममन्त्रादिप्राप्तौ स्त्रीशूद्राणाममन्त्रकमिति मन्त्रपर्युदासमिद्धेरमन्त्रकप्रतिग्रहसिद्धिः वस्त्वन्तरप्रतिग्रहवत्। किञ्च न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वेत्यौत्सर्गिकनिषेधस्य अन्यत्रानुज्ञानाद्भर्त्तुरित्यपवादकः प्रतिप्रसवः। तच्च निमित्तं भर्त्रनुज्ञानं। ततश्च विधवाया भर्त्रभावेनानुज्ञानासम्भवात् निर्निमित्तकप्रतिप्रसवाप्रवृत्त्या बाधकान्तराभावाच्चानधिकार इति सर्व्ववादिसम्प्रतिपन्नमेव। न चैवमलौकिकतापरिहारो न स्यादिति वाच्यम्, मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्यव्रते स्थिता। स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्म-

दारकर्मेति वचनात्। "अधिकृताधिकारादिति" अधिकृते प्रतिग्रहे अधिकारादित्यर्थः। 'होममन्त्रादिप्राप्तौ' इति अन्वयेनान्वादि। "अमन्त्रकमिति" मते इति। "प्रधानादिति" वाक्यशेषस्य व्याख्या।

चारिण इति मनुना ब्रह्मचर्य्येणैव तत्परिहाराभिधानादिति सकलमकलङ्कम्।

अपुत्रेणेत्येकत्वश्रवणाच्च न द्वाभ्यां त्रिभिर्वा एकः पुत्रः कर्त्तव्य इति गम्यते। नन्वेवं दत्तकादीनां द्व्यामुष्यायणत्वस्मरणं विरुध्येत। तथा च प्रयोगपारिजाते स्मृत्यन्तरम्। द्व्यामुष्यायणका ये स्युर्दत्तकक्रीतकादयः। गोत्रद्वयेऽप्यनुद्वाहः शुङ्गशैशिरयोर्यथेति। मैवं। द्व्यामुष्यायणत्वस्य जनकपरिग्रहीतृद्वयाभिप्रायकत्वात्। निषेधस्य परिग्रहीतृद्वयमभिप्रेत्येति न विरोधः। प्रतिनिधिश्च क्षेत्रजादिरेकादशविधः। क्षेत्रजादीन् सुतानेतानेकादश यथोदितान्। पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिण इति मानवात्। तत्र च येषु दम्पत्योरन्यतरावयवसम्बन्धस्तेषां न्यायादेव

---

अपुत्रेणेति। तथाच एकत्वस्य विधेयविशेषणतया विवक्षितत्वादिति भावः। "न द्वाभ्यामिति" प्रतिग्रहीतृद्वयाभिप्रायको निषेध इति वक्ष्यति। "प्रतिनिधिश्चेति" तत्र च औरसपुत्रिकयोर्मुख्यत्वेन न प्रतिनिधित्वं तदुक्तम्। आज्यं विना यथा तैलं सद्भिः प्रतिनिधीकृतम्। तथैकादश पुत्रास्तु पुत्रिकौरसयोर्विनेति केचित्। "क्रियालोपादिति" तथाहि एते प्रतिनिधय क्रियालोपप्रसङ्गात् उपादीयन्ते। तथा चापत्यमुत्पादनीयम् इत्यथ तावद्गृहस्थाश्रममधिकृत्य विधिः प्रवर्त्तते। जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् जायते इत्यादि श्रुतेः। वस्तुतस्तु पुत्रिकाया अपि प्रतिनिधित्वमस्ति, तस्याः स्त्रीत्वेन पुमपत्यवाच्यत्वात् स्वतः पार्वणपिण्डदातृत्वाभावाच्च। मुख्यौरसाङ्गत्वादुपकारापेक्षाभिप्रायत्वात् प्रतिनिधिव्यवहारस्य सदेवोच्यते येष्विति। "न्यायात्" सोसादृश्यलक्षणात्। "वचनन्तु नियमार्थं" सिद्धे सत्यारम्भो नियमार्थेति न्यायादिति

प्रतिनिधित्वं वचनन्तु नियमार्थं। येषु पुनरवयवसम्बन्धाभाव-स्तेषां वाचनिकं प्रतिनिधित्वं। यथा क्षेत्रजपौत्रिकेयपुत्रिका-कानीन-पौनर्भव-सहोढ़ज-गूढ़जानां क्वचित् मातृमात्रसम्बन्धात् क्वचिच्च विकल्पोभयसम्बन्धादिकत्वावयवत्वेन मुख्यं प्रतिनिधित्वं, दत्तकक्रीतकृत्रिमदत्तात्मापविद्धानां वाचनिकं प्रतिनिधित्वमिति प्रतिनिधिशब्दस्योभयत्रापि भूम्ना स्तुष्टोरुपदधातीतिवत्।

यत्तु मेधातिथिना नह्येषां प्रतिनिधिता सम्भवति प्रारब्धस्य कर्मणोऽङ्गापचारे प्रतिनिधिः। नच पुत्रः कर्माङ्गं अपत्योत्पादन-

---

श्रेयः। तथाचावरुद्धादास्याद्युत्पन्नस्यावयवसम्बन्धेऽपि तस्य न प्रतिनिधित्वमिति भावः। "यथेति, क्वचिदिति"। क्षेत्रजकानीनसहोढ़जगूढ़जेषु मातृमात्रावयवसम्बन्धः पौनर्भवेव तु मातापित्रवयवसम्बन्धः। नचैवं पौनर्भवस्यौरसतुल्यत्वमाशङ्कनीयम्। तस्यातुः पर-पूर्वात्वेन अधन्यत्वात् तज्जन्यतया थौरसाज्जघन्यत्वमिति बोध्यम्। पुत्रिकायां पौत्रिकेये चोभयोरावयवसम्बन्धः पुत्रिकायां साक्षात् पौत्रिकेये परम्परया इति विशेषः। कृत्रिमदत्तात्मापविद्धानां दम्पत्योरन्यतरस्याप्यवयवसम्बन्धाभावात् सौसादृश्यापानवशेन वचनबलात् प्रतिनिधित्वमिति भावः। "भूम्नेति" 'उपदधाति' व्यपदिशति इत्यर्थः, तथाच यथाकाशदिक्कालादीनामस्पृष्टित्वेऽपि स्पृष्टिव्यपदेशः तथा प्रकृतेऽपीत्यर्थः। इदन्तु न्यायनयमभिप्रेत्योक्तं। वेदान्तमते तु आकाशादेरपि स्पृष्टित्वाभिधानात्। तथाच श्रुतिः, एतस्मादात्मन आकाशः सम्भूतः आकाशाद्वायुरित्यादि। मनुरपि आकाशं जायते तस्मादिति।

"पुत्रः कर्मेति, अङ्गमिति" ऋतुगमनेन पुत्रं भावयेदिति विधेः तस्य विधेयत्वेन मुख्यत्वादङ्गत्वाभावादिति भावः। "अगुणकर्मत्वात्" अनङ्ग-

कर्मणोऽपुत्रकर्मत्वात् तेन मत्येव क्षेत्रजादीनां पुत्रशब्दे प्रतिनिधित्ववचनमौरसप्रशंसार्थं उपकारापचयाभिप्रायत्वात् प्रतिनिधिव्यवहारस्य, यथौरसो भूयांसमुपकारं कर्त्तुं शक्नोति न तथेतर इत्युक्तम्, तच्चिन्त्यं । दत्तकादीनां प्रतिनिधित्वाभावे साध्ये पुत्रोत्पादनकर्मणोऽनङ्गत्वस्य हेतोरपक्षधर्मत्वात् तेषां सिद्धत्वेनोत्पादनयोग्यत्वात् । अथ पुत्रोत्पादनविधौ पुत्रस्य भाव्यत्वेनानङ्गत्वं । सत्यं अनङ्गत्वं किन्तूत्पादनविधावेव न तु विध्यन्तरे । एष वा अनृणो यः पुत्रीत्यादिवाक्येषु पुत्रेणानृण्यं भावयेदिति विधिपर्य्यवसानेन पुत्रस्यानृण्यकरणतया अङ्गतासिद्धेः । उक्तञ्च साक्षादेव मनुना पुत्रस्य करणत्वं पुत्रेण लोकान् जयतीत्यादिना । यद्येवं तर्हि पौत्रप्रपौत्रयोरपि आनन्त्यब्रध्नविष्टपप्राप्त्यर्थं पुत्रप्रतिनिधिः स्यात् । आस्तां नाम किन्नश्छिन्नम् ।

---

कर्मत्वादित्यर्थः । 'पुत्रशब्दे' पुत्रशब्दवाच्यत्वे इत्यर्थः । 'चिन्त्यं, दूष्यत्वेनेति शेषः । 'दत्तकादीनामिति' दत्तकादिर्न प्रतिनिधिः अपत्योत्पादनकर्मणोऽनङ्गत्वादित्यनुमाने अपत्योत्पादनस्यानङ्गत्वरूपहेतोः पक्षस्य दत्तकादेरुत्पन्नत्वेनानाश्रयत्वात् पर्वतो वह्निमान् धूमादित्यत्र धूमहेतोः पर्वतपक्षाश्रयत्ववत् नात्रास्तीति भावः । 'पुत्रोत्पादनविधाविति' ऋतुगमनेन पुत्रं भावयेदिति विधावित्यर्थः । "भाव्यत्वेन" विधेयत्वेन । 'न तु विध्यन्तरे, एष वा अनृणो यः पुत्रीत्यादिश्रुतिबोधितपुत्रेणानृण्यं भावयेदिति विध्यन्तरे इत्यर्थः । तत्र पुत्रस्य तृतीयाबोधितकरणत्वेनाङ्गत्वात् प्रतिनिधित्वं स्यादिति भावः । 'पुत्रप्रतिनिधिः' पुत्रवत् तयोरपि प्रतिनिधिः स्यादित्यर्थः । आनन्त्यब्रध्नविष्टपप्राप्त्यर्थं प्रतिनिधिः स्यादिति

नचोभयैकवाक्यतयैकविधित्वसम्भवः । ऋतुगमनपुत्त्रयोः करणयोः पुत्त्रानृण्ययोर्भाव्ययोश्चैकविधावनन्वयात् अन्वये च विरुद्ध-त्रिकद्वयापत्तेः । तस्मादानृण्यभाव्यिकायां भावनायां पुत्त्रस्य करण-

---

क्वचित् पाठः । तदा व्यक्त एवार्थः । 'आस्तां नामिति' अस्तीत्पदप्रयोगस्तु एतस्यां व्यवस्थायामनास्थासूचनार्थमिति बोध्यम् ।

न चेति । तथाच क्रियाद्वयश्रवणात् उभयोर्भिन्नवाक्यत्वादिति भावः । ननु अमावास्यायां श्राद्धं कुर्य्यात् रात्रौ श्राद्धं न कुर्वीत इत्यत्र एकवाक्यत्वेऽपि एकक्रियाया भेदकल्पनेनैव ऋतुगमनपुत्त्राभ्यां पुत्त्रानृण्ये भावयेदितिविधिपर्य्यवसानेनान्वयसिद्धेः कथमनन्वय इत्यत आह अन्वये चेति । 'विरुद्धत्रिकद्वयेति' तथाहि ऋतुगमनेन पुत्त्रं भावयेदिति विधौ पुत्त्रस्योद्दिश्यमानत्वम् अनूद्यमानत्वं प्रधानत्वम् एते त्रयो धर्मा वर्त्तन्ते । पुत्त्रेणानृण्यं भावयेदितिविधौ पुत्त्रस्य उपादेयत्वं विधेयत्वं शेषत्वम् एते त्रयो धर्मा वर्त्तन्ते । प्रथमविधिस्तु पुत्त्रोद्देशेन ऋतुगमन-साधकः प्रवृत्तिजनकः । तस्योद्देश्यत्वं पुत्त्रे वर्त्तते । एवं पूर्वविधौ पुत्त्र-मनूद्य ऋतुगमनं विधीयते । अतः पुत्त्रस्यानूद्यमानत्वम् । एवं ऋतुगमनस्य करणत्वेनाङ्गत्वं पुत्त्रस्य फलत्वेन प्रधानत्वं इति प्रथमविधौ पुत्त्रे त्रिकं, द्वितीयविधिस्तु पुत्त्रसाधनकानृण्योद्देशकप्रवृत्तिजनकः, तस्य साध्यत्वरूपो-पादेयत्वं पुत्त्रे वर्त्तते । एवं द्वितीयविधौ आनृण्यमुद्दिश्य पुत्त्रो विधी-यते इति पुत्त्रे विधेयत्वं प्रथमोक्तविधेयत्वरूपम्, एवं द्वितीयविधौ भाव्यस्यानृण्यस्य करणत्वात् पुत्त्रेऽङ्गत्वरूपं शेषत्वम् एतत्त्रिकद्वयविरो-धात्तयोर्विध्योरैक्यं न सम्भवतीति भावः । उद्दिश्यमानत्वं भाव्यत्वं तदि-तरद् उपादेयत्वं भावकत्वं अनूद्यमानत्वं पूर्व्वकथितकथनरूपानुवाद-विषयत्वं, तदितरद् विधेयत्वम् अकथितकथनरूपविधिविषयत्वं प्रधानत्वं फलत्वं तदितरद् शेषत्वं साधनत्वमिति । 'तस्मादिति' आनृण्यं भाव्यं साध्यं

तथा तदपचारे दत्तकादीनां प्रतिनिधित्वमविरुद्धं सोमापचारे पूतिकानामिव। एतदेव स्पष्टीकृतं मनुना क्रियालोपान्मनीषिण इति। 'क्रिया' पिण्डोदकादिक्रिया। औरसाभावे प्रतिनिध्यकरणे तल्लोपापत्तेः। तथा अत्रिणापि पिण्डोदकक्रियाहेतोरिति सर्वमनवद्यम्।

यदपि न स्वामित्वस्य भार्यायाः पुत्रस्य देशस्य कालस्याग्नेर्देवतायाः कर्मणः शब्दस्य च प्रतिनिधिरिति सत्याषाढवचनेन पुत्र-

---

यत्र भावनायां पुत्रेणान्वयं भावयेदितिविधिरूपायामित्यर्थः। 'सोमापचारे इति' सोमेन यजेत इत्यत्र सोमस्य करणत्वेनाङ्गत्वात् तदपचारे यदि सोमं न विन्देत् तदा पूतिकामभिषुणुयादिति श्रुतिबलात् पूतिकानां प्रतिनिधित्ववदित्यर्थः। 'एतदेवेति, स्पष्टीकृतमिति' क्षेत्रजादीन् सुतानेतानेकादश यथोदितान्। पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिण इत्यत्र मनुवचने औरसाभावे क्षेत्रजादीनां प्रतिनिधिकरणं सिद्ध्यतीति भावः। 'अत्रिणापीति' तथाच अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदेत्यनेनात्रिणा औरसाभावे क्षेत्रजादीनां *प्रतिनिधित्वं स्पष्टमेवोक्तमिति भावः।*

न स्वामित्वस्येति। 'स्वामित्वस्य' स्वत्वस्य इत्यर्थः, भार्यासाहचर्य्यात् स्वामित्वस्य पतित्वस्येति वार्थः। पत्यपचारे देवरादीनां प्रतिनिधित्वस्य देवराद्वा सपिण्डाद्वा इत्यादिवचनविरुद्धत्वात्। 'देशस्य' गयादिरूपस्य न गङ्गादिरूपः प्रतिनिधिः। 'कालस्य' पूर्व्वाह्णादेर्नापराह्णादिः। 'अग्नेः' आहवनीयादेर्न प्रतिनिधिः। 'देवतायाः' विष्ण्वादिरूपायाः शिवादिर्न प्रतिनिधिः। ननु अग्न्यभावे तु विप्रस्य पाणाविव जलेऽपि वेति वचनेन वह्निप्रतिनिधिः विप्रपाणिर्जलञ्चोक्तं तत् कथमुक्तं नाग्नेरिति

प्रतिनिधिनिराकरणं तत् तन्तवे ज्योतिष्मतीन्तामाशिषमाशासत इत्यादावपुत्त्रस्य पुत्त्रप्रतिनिधिं कृत्वा आशीराशंसननिवृत्त्यर्थं। अतएव श्रुतिः। यस्य पुत्त्रो जातः स्यात्तन्तवे ज्योतिष्मतीमिति ब्रूयादिति। तथा पिता पुत्त्रीये सामनि अमुकस्य पिता यजत इत्यादावपुत्रस्य पुत्त्रप्रतिनिधिं कृत्वा तत्प्रवचननिराकरणार्थं न पुनः सर्वथैव पुत्त्रप्रतिनिधिनिराकरणार्थं *पुत्त्रप्रतिनिधीनाहुरित्यादिस्मृतिविरोधात्।

---

चेन्न, तस्य आज्याङ्गामौकरणहोममात्रविषयत्वात्। 'तन्तवे ज्योतिष्मतीमिति' तन्तुरपत्यमित्यर्थः, 'ज्योतिष्मतीं' बलवतीम्। अयमर्थ भावः। यस्य पुत्त्रो नास्ति तस्याशीराशंसनविधिः पुत्त्रवतो नासौ किन्तु पुत्त्रप्रतिनिधिना अपुत्त्रेणाशीराशंसननिवृत्त्यर्थं पुत्त्रप्रतिनिधिर्नैव कर्त्तव्यः पिण्डोदकाद्यर्थं पुनः पुत्त्रप्रतिनिधिः कर्त्तव्य एवेति भावः। ननु पिण्डोदकाद्यर्थं पुत्त्रप्रतिनिधिकरणपक्षे आशीराशंसननिवृत्तिः स्वाभाविक्येव निषेधो विफल इति वाच्यं। केवलमाशीराशंसननिवृत्त्यर्थं पुत्त्रप्रतिनिधिनिषेधे तद्वचनस्य तात्पर्यात् ब्राह्मणस्य क्षत्रियायामुत्पन्नस्य क्षेत्रजादेर्वा निषेधे तदाशयात् तादृशक्षेत्रजादेरसवर्णतया ब्राह्मणपिण्डोदकाद्यनर्हत्वादिति बोध्यम्। केचित्तु 'अपुत्त्रस्य' औरसपुत्त्ररहितस्य। 'पुत्त्रप्रतिनिधिं' क्षेत्रजादिकं। तथाच आशीराशंसनकर्म्मादावेव पुत्त्रप्रतिनिधिनिषेधकं सत्याषाढसूत्रं नतु सर्वत्रेति भावः। अत्र श्रुतिप्रमाणं दर्शयति यस्य पुत्त्रो जात इत्यादि। यस्य पुत्त्रो जातः स्यात्, 'जातः' औरसः पुत्त्रो यस्य स्यादित्यर्थः। तथाच औरसपुत्त्रवतैव आशीराशंसनं कार्य्यं न पुनः क्षेत्रजादिपुत्त्रवतेति भावः। 'निराकरणार्थमिति' तथाच सत्याषाढसूत्रे यः पुत्त्रप्रतिनिधिनिषेधः स पर्व्वासाशीराशंसनपितापुत्त्रीयसामप्रवर्त्तनपर-

अथेदं चिन्त्यते योऽयं प्रतिनिधिर्विधीयते स किं पुत्त्रोत्पादनविधावुत पिण्डोदकादिविधाविति,उभयथाश्रवणात्। यथा अपुत्त्रेणैव कर्त्तव्य इत्यनेन पुत्त्रोत्पादनविधौ पिण्डोदकक्रियाहेतोरित्यनेन च पिण्डोदकादिविधाविति। तत्र नाद्यः पुत्त्रोत्पादनविधौ पुत्त्रस्य भाव्यत्वेनानङ्गतया प्रतिनिध्ययोग्यत्वात्। न द्वितीयः विरोधात्। अपुत्त्रं प्रति पुत्त्रप्रतिनिधिः श्रूयते न तत्कृता पिण्डोदकक्रिया, पुत्त्रकर्त्तृका च पिण्डोदकादिक्रिया, न तं प्रति प्रतिनिधि-

---

इति न कश्चिद्विरोध इति प्राहुः। प्रकारान्तरं दर्शयति पितापुत्त्रीय इति। पितापुत्त्रीये पितापुत्त्रनामघटिते अमुकस्य पिता यजते इत्येतत्स्वरूपे सामनि गीतेषु सामास्विति श्रुतेः। तथाच प्रवचनविधिस्तु पुत्त्रवतो नापुत्त्रस्य, तन्निवृत्त्यर्थं अपुत्त्रेण पुत्त्रप्रतिनिधिरेव कर्त्तव्य इति भावः।

अथेदमिति। अपुत्त्रेणैव कर्त्तव्य इत्यनेन औरसपुत्त्रोत्पादनाभावे तदर्थं किं दत्तकादिः प्रतिनिधिरुत पिण्डोदकाद्यपचारे तदर्थं दत्तकादिः, क्रमेण पक्षद्वयं दूषयति तत्र नाद्य इति। पुत्त्रोत्पादेति—ऋतुगमनेन पुत्त्रमुत्पादयेदितिविधावित्यर्थः। तथाचात्र पुत्त्रस्य भाव्यत्वेन विधेयत्वेन प्राधान्यादङ्गत्वाभावेन अङ्गापचारे प्रतिनिधिरिति प्रतिनिधिन्यायविरोधादितिभावः। न द्वितीय इति विरोधादिति—विरोधमुपपादयति अपुत्त्रमिति। न तत्कृतेति।—पिण्डोदकक्रिया तत्कृता अपुत्त्रकर्त्तृका न, पुत्त्रकर्त्तृकैव पिण्डोदकक्रिया इत्यन्वयः। न तं प्रति प्रतिनिधिरिति।—तं प्रति पुत्त्रं प्रति न प्रतिनिधिः श्रूयत इति पूर्वेणान्वयः। तथाच पुत्त्रकर्त्तृके कर्मण्येव तं प्रति प्रतिनिधिविधानं सम्भवति न त्वन्यकर्त्तृके। एवञ्च पुत्त्रकर्त्तृकेऽपि पिण्डो-

विधिरिति। किञ्च पिण्डोदकादिविधिः पुत्त्रकर्तृको न च कर्त्तुः प्रतिनिधिः। अथापि क्रियाकर्तृत्वांशे प्रतिनिधिर्न फलभोगांशे, यथा सत्त्रे सप्तदशानामन्यतमस्य मृतस्य क्रियाकर्तृत्वांशे प्रतिनिधिस्तथात्रापीति वाच्यम्। तदपि न, वैषम्यात्। सत्त्रे ह्यारब्धक्रियस्य प्रतिनिधिः। प्रकृते त्वत्यन्ताशक्तः क्रियारम्भस्यैवासम्भवात् कथं प्रतिनिधिसम्भवः न च प्रतिनिधिना क्रियारम्भो न्यायवित्सम्मतः।

---

दकादिकर्मणि यदपुत्त्रं प्रति पुत्त्रप्रतिनिधिविधानं तदन्याय्यमिति विरोध इति भावः। नन्वत्रापि अन्यकर्तृकक्रियायामपि अन्यं प्रति प्रतिनिधिविधानमङ्गीकर्त्तव्यमित्यतो दूषणान्तरमाह किञ्चेति। 'कर्त्तुः' क्रियाकर्त्तुः, 'प्रतिनिधिः' प्रतिनिधित्वं, धर्मधर्मिणोरभेदात्। तथाच क्रियाकर्तृवैधर्म्येण सौसादृश्याभावात् प्रतिनिध्ययोग्यत्वात् सौसादृश्यादेव प्रतिनिधिव्यवहार इति भावः। ननु सप्तदशकर्तृके सत्त्रे एकस्य ऋत्विजोऽपचारे यथा ऋत्विगन्तरस्य क्रियाकर्त्तुः प्रतिनिधित्वं तथेहापि कर्त्तुरपि पुत्त्रस्य प्रतिनिधित्वमविरुद्धमित्याशङ्कते अथेति। 'फलभोगांशे' क्रियांशे, फलस्य भोगो यस्मादिति व्युत्पत्तेः। दूषयति तदपीति। वैषम्यादिति—वैषम्यं स्यादिति। वैषम्यं प्रदर्शयति सत्त्रे हीति। तथाच सत्त्रे हि आरब्धक्रियस्य कर्त्तुरभावे अपरस्तत्कर्त्ता प्रतिनिधिर्भवति, भवतु प्रकृते तु क्रियाकर्त्तुरारम्भाभावेन अपुत्त्रस्य क्रियैव नास्ति क्व क्रियाकर्तृत्वांशे प्रतिनिधित्वावसरः, शिरो नास्ति शिरोव्यथेतिवदिति भावः। अथ क्रियारम्भ आरम्भाभावे नास्ति सत्यं, प्रतिनिधिनैव क्रियारम्भ इत्यत्रोक्त आह न च प्रतिनिधिनेति। न्यायविदिति—न मीमांसकसम्मत। "काम्ये प्रतिनिधिर्नास्ति नित्यनैमित्तिके हि सः। काम्येऽप्युपक्रमादूर्ध्वं केचिदिच्छन्ति सत्तमाः" इति वचनात्,

अथापुत्रस्य जीवच्छ्राद्धे स्वकर्त्तृक एव पिण्डादिविधिरिति तत्रैव प्रतिनिधिरिति वाच्यं। तदपि न, पुत्रप्रतिनिधिसम्भवे जीवच्छ्राद्धविधेरेवाप्रवृत्तेः। किञ्च जीवच्छ्राद्धस्य स्वकर्त्तृकत्वेन स्वस्यैव प्रतिनिधिः स्यात् न पुत्रस्य, पुत्रकर्त्तृकत्वाभावात्। तस्मादुक्तविधिद्वयेऽपि पुत्रप्रतिनिधिसम्भवः। किञ्च पिण्डोदकक्रियाहेतोरिति हेतुवचनमप्ययुक्तमेव अपक्षधर्मत्वात्। न ह्यपुत्रस्य पिण्डोदकक्रियाप्राप्तिरस्तीत्युक्तमेवेति। अत्रोच्यते नापुत्रस्य लोकोऽस्तीत्याद्यर्थवादानुगृहीते पुत्रेण लोकान् जयतीत्यादिविधौ पुत्रापचारे चेत्रजाद्येकादशविधः प्रतिनिधिर्विधीयते, तत्र च लोक-

---

'श्रौतं कर्म स्वयं कुर्य्यादन्योऽपि स्मार्त्तमाचरेत्। अशक्तौ श्रौतमप्यन्यत् कुर्य्यादाचारमन्ततः' इति वचनाच्च।

ननु अपुत्रस्य स्वकर्त्तृकश्राद्धविधिरस्ति स एव क्रियाकर्त्ता तदपचारे क्रियाकर्त्तृत्वांशे प्रतिनिधिः सुलभ एव इत्याशङ्कते अथेति। दूषयति तदपि नेति। स्वस्यैव प्रतिनिधिः—दत्तकादिरिति शेषः। तथाच दत्तकादेः स्वप्रतिनिधित्वं स्यात् न पुनः पुत्रप्रतिनिधित्वम्। नचेष्टापत्तिः। अपुत्रेणैव कर्त्तव्य इत्यादिवचनविरोधादितिभावः। तस्मादुक्तविधिद्वयेऽपीति पुत्रोत्पादनविधौ पिण्डोदकादिविधौ चेत्यर्थः। दूषणान्तरमाह किञ्चेति, अपक्षधर्मत्वादिति। अपुत्रः पुत्रप्रतिनिधिमान् पिण्डोदकक्रियावत्त्वादित्यनुमाने हेतोरपक्षधर्मत्वात्, अपुत्रस्य पुत्रकर्त्तृकक्रियाप्राप्त्यभावेन न हेतोरपुत्ररूपपक्षवृत्तित्वमितिभावः। पूर्वपक्षं समाधत्ते अथेदं चिन्त्यत इति। अत्रोच्यत इति सिद्धान्त इति शेषः। नापुत्रस्य लोकोऽस्तीत्यस्य निन्दार्थवादत्वात् तेनानुगृहीते उत्तम्भिते सत्सहचरिते पुत्रेण लोकान् जयतीत्यादिविधौ इत्यर्थः।

पुत्रयोः साध्यसाधनभावनिर्वाहकावान्तरव्यापारभूतक्रियापेक्षायां पिण्डोदकक्रियाहेतोरित्युच्यते।

यदेति। वन्ध्याष्टमेऽधिवेत्तव्येत्यादिवदत्रावधि प्रतीक्षाभावं बोधयति। 'पिण्डः' श्राद्धम्। 'उदकम्' अञ्जलिदानादि। 'क्रिया' और्द्ध्वदेहिका दाहादि, ता एव हेतुः पुत्रीकरणे निमित्तं। हेतोरित्येकत्वनिर्द्देशात् मिलितानामेषां निमित्तत्वं न प्रत्येकमिति गमयति। तेन चैकैकार्थं न पृथक् पुत्रीकरणं किन्तु सर्वार्थमेकमेव पुत्रीकरणमित्यर्थः। पुत्राभावे पिण्डादिलोपप्रसङ्गात्। अतएव मनुः—पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिण इति। क्रियालोपादिति व्यतिरेके हेतुः। पुत्रप्रतिनिध्यभावे क्रियालोपादित्यर्थः। यद्वा अलोपादितिपदच्छेदः अलोपादिति ल्यब्लोपे

---

लोकपुत्रेति—तथाच पुत्रेण लोकान् जयतीत्यनेन पुत्रस्य साधनत्वं लोकस्य साध्यत्वञ्च यदुक्तं तदवान्तरव्यापारभूतश्राद्धादिक्रिययैव भवति नतु स्वतः, अन्यथा क्लीबादिभिः पुत्रैरपि अलोकतापरिहारो भवतु इति भावः।

यदेति। अपुत्रेणैव कर्त्तव्य इत्यत्र वचने। वन्ध्याष्टमेऽधिवेत्तव्या दशमे च मृतप्रजा। एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनीत्यादौ प्रथमत्वपेक्षया अष्टमाब्दादिकालेऽधिवेदनादिवत् नात्र कालप्रतीक्षा। अपुत्रत्वावधारणमात्रेण ब्राह्मणादिभिरुपनीतैः शूद्रेण विवाहयोगेन पुत्रो ग्राह्य इति भावः। इदमुपलक्षणम्। यदेत्यनेन कालाशुद्ध्यादिरपि नापेक्षणीयः पुत्रोत्पादनविधेर्नित्यत्वात् निरवकाशनैमित्तिकत्वाच्च। नैमित्तिकानि काम्यानि निपतन्ति यथा यथा। तथा तथैव कार्य्याणि न कालस्तु विधीयते। इत्यस्याप्यत्रावकाश इति बोध्यम्। ननु औरसा-

पञ्चमी, अलोपार्थमित्यर्थः। यद्यपि पुत्राभावे तु पत्नी स्यादित्यादिना पुत्राभावे पत्न्यादीनामपि क्रियाधिकारः श्रूयते तथापि नापुत्रस्य लोकोऽस्तीत्यादिश्रवणात् पुत्रकृतक्रियाजन्या लोकाः, न स्व्यादिकृतक्रियया जन्यन्त इत्यवश्यं वाच्यम्। अन्यथा पुत्रपत्न्यादीनां तुल्यफलकक्रियाधिकारे तुल्यतया विकल्पापत्त्या अभावविधानानुपपत्तेः। तस्मात् पुत्रकृतक्रियाजन्यलोकविशेषसिद्ध्यै पुत्रप्रतिनिधिरावश्यक इति। उक्तञ्च मेधातिथिना, तत्र च यदौरसस्य प्रथमकल्पिकत्ववचनं तन्न व्यवहारोपयोगि किन्तूपकारातिशयाय। यथौ-

---

भावे कथं दत्तकादिः प्रतिनिधिः क्रियते पिण्डोदकादिक्रियायाः पत्न्यादपि निर्व्वाहादित्यत आह क्रियाधिकार इति। प्रेतक्रियाधिकार इत्यर्थः। जन्यन्त इति—। इदमुपलक्षणं पत्न्याः पार्व्वणपिण्डदानानधिकारित्वेन पुत्राभावे तत्सत्त्वेऽपि पार्व्वणपिण्डलोपापत्तिरित्यपि बोध्यम्। अभावेति—पुत्राभावे तु पत्नी स्यादित्यादिना अभावविधानानुपपत्तेः तुल्यफलतया ऐच्छिकविकल्पेन प्रमाणत्वाप्रमाणत्वाद्युक्ताष्टदोषप्रसक्तेनं व्यवस्था स्यात्। न चैतत् समुचितम्, अगत्या ऐच्छिकविकल्पस्य ग्राह्यत्वात्। अतएवोक्तं एवमेवाष्टदोषोऽपि यद्व्रीहियववाक्ययोः। विकल्पः संश्रितस्तत्र गतिरन्या न विद्यत इति॥ उक्तार्थे मेधातिथिसंवादं दर्शयति उक्तञ्चेति। प्रथमकल्पिकत्ववचनं—स्वक्षेत्रे संस्कृतायान्तु स्वयमुत्पादयेद्धि यम्। तमौरसं विजानीयात् पुत्रं प्रथमकल्पिकमिति मनुवचने इति शेषः। क्षेत्रमित्यर्थपरमयथार्थमिति। 'क्षेत्रे' स्त्रियामित्यर्थः, "क्षेत्रभूता स्मृता नारी बीजभूतः स्मृतः पुमान्" इति मानवात्। न व्यवहारोपयोगि—न दृष्टार्थमात्रं किन्त्वदृष्टार्थमपीत्यर्थः। भूयांसमुपकारं—दृष्टादृष्टरूपं श्राद्धपोषणादिनेति शेषः। क्रियत इति

रसो भूयांसं शक्तोत्युपकारं कर्त्तुं न तथेतर इति उपकारापचया-भिप्रायस्य प्रतिनिधिव्यवहार इति। यत्तु तेनैव क्रियालोपादित्यत्र क्रियत इति क्रिया, अपत्यमुत्पादयितव्यमिति विधिः, तस्य लोपो माभूदिति नित्योऽयं विधिः स यथाकथञ्चिद्दत्तेन सम्पाद्यः। तत्र मुख्यः कल्प औरसः, तदसम्पत्तावेते कल्पा आश्रयितव्या इति व्याख्यातम् तच्चिन्त्यं। किं पुत्त्रोत्पादनविधेर्द्दत्तकादिविधिः प्रति-निधिरित्युच्यते आहोस्विदौरसस्य दत्तकादिरिति। नाद्यः, न देवताशब्दक्रियमित्यस्मिन्नधिकरणे क्रियायाः प्रतिनिधिनिरा-करणात्। न द्वितीयः,न ह्येषां प्रतिनिधिता सम्भवतीत्यादिपूर्व्वग्रन्थ-विरोधात्। तत्र पुत्त्रोत्पादनविधौ पुत्त्रस्य भाव्यत्वेनानङ्गतया प्रति-निध्यसम्भवाभिधानात्। तस्मात् न क्रियाशब्देन पुत्त्रोत्पादनविधिः किन्तु पिण्डोदकक्रियैव वाच्या, पिण्डोदकक्रियाहेतोरित्यत्रिवाक्यै-कवाक्यत्वादित्यलं।

प्रयत्नत इति पञ्चम्यन्तमिदं, यस्मात्तस्मादिति सामानाधि-करण्यात्। ततश्च येन केनापि प्रयत्नेन पुत्त्रप्रतिनिधिः कार्य्य इत्यर्थः। तत्र च प्रयत्नसामान्यश्रुतावप्येकादशपुत्त्रश्रवणादेकादशैव प्रयत्नाः

---

क्रिया, तथाच क्रियापदं कर्म्मव्युत्पन्नमिति भावः। 'क्रियायाः' पुत्त्रोत्पा-दनक्रियाया इत्यर्थः। 'पूर्व्वग्रन्थविरोधात्' मेधातिथेः पूर्व्वग्रन्थविरो-धात्, स ग्रन्थस्तु न ज्ञेयानिति।

प्रयत्नत इति। सामानाधिकरण्यादिति।—तथाच यस्मात्तस्मा-दिति विशेषणपदस्य उपस्थितेन प्रयत्नत इति विशेष्येणान्वये सम्भ-वति उक्तव्यवस्थाया अन्याय्यत्वादिति भावः। प्रसिद्धोगतयेति।—चित्र-

अभ्यनुज्ञायन्ते। तेऽपि कलौ, अनेकधा कृताः पुत्रा ऋषिभिर्ये पुरातनैः। न शक्यास्तेऽधुना कर्त्तुं शक्तिहीनतया नरैरिति वृहस्पतिस्मरणात्, दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रह इति च शौनकेन पुत्रान्तरनिषेधात् दत्तौरसावेवाभ्यनुज्ञायेते। दत्तपदं कृत्रिमस्याप्युपलक्षणम्, औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः सुत इति कलिधर्मप्रस्तावे पराशरस्मरणात्।

नचैवं क्षेत्रजोऽपि पुत्रः कलौ स्यादिति वाच्यं। तत्र नियोगनिषेधेनैव तन्निषेधात्। अस्तु तर्हि विहितप्रतिषिद्धत्वात् विकल्प इति चेन्न, दोषाष्टकापत्तेः। कथन्तर्हि क्षेत्रजग्रहणमिति चेत्, औरस-

---

जकानीनगूढ़जाद्यशुद्धपुत्राणां शुद्धिजननब्राह्मणादितेजोजन्यादृष्टशक्तिहीनतया प्रायशः कलौ जनानां तादृशशक्तेरभावात्। तथाच वृहस्पतिः।—उक्तो नियोगो मनुना निषिद्धः स्वयमेव तु। युगक्रमादशक्योऽयं कर्त्तुमन्यैर्विधानतः। तपोज्ञानसमायुक्ताः कृतत्रेतायुगे नराः। द्वापरे च कलौ नृणां शक्तिहानिर्हि निर्म्मिता इति। शौनकेनेति।—इमान् धर्म्मान् कलियुगे वर्ज्यानाहुर्म्मनीषिण इत्यादिनेति शेषः। नियोगनिषेधेनेति—यथा नियोगधर्मो नो नानुबन्ध्यावधोऽपि वा। तथोद्धारविभागस्तु नैव सम्प्रति वर्त्तते इति याज्ञवल्कीयात्। 'अनुबन्ध्या' वशावत्सा। अनुबन्ध्येत्युपलक्षणं, बन्ध्यापीति ज्ञेयं, मैत्रावरुणीं गां वशामनुबन्ध्यामालभेतेत्यादिश्रुतिवाक्यत्वात्। औरसः क्षेत्रजश्चैवेति, विहितप्रतिषिद्धेति।—नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिरित्याभ्यां मनुपराशरवचनाभ्यामिति शेषः।

विकल्प इति—ऐच्छिक इति शेषः, वैदिकप्रमाणत्वेन तुल्यबलत्वात्। दोषाष्टकं यथा-प्रमाणत्वाप्रमाणत्वपरित्यागप्रकल्पनात्। तदुज्जीवन-

विशेषणत्वेनेति ब्रूमः। तथा च मनुः स्वक्षेत्रे संस्कृतायान्तु स्वयमुत्पादयेद्धि यं। तमौरसं विजानीयात् पुत्त्रं प्रथमकल्पिकमिति॥

तयोर्मध्ये दत्तकविधिरभिधीयते। स च कः कीदृशः कश्च ग्राह्य इति त्रितयं निरूपणीयं। तत्र क इत्याह शौनकः। ब्राह्मणानां सपिण्डेषु कर्त्तव्यः पुत्त्रसंग्रहः। तदभावेऽसपिण्डे वा अन्यत्र तु न कारयेदिति। 'सपिण्डेषु' सप्तमपुरुषावधिकेषु सपिण्डेष्विति सामान्यश्रवणात् समानासमानगोत्रेष्विति गम्यते। तत्र समानगोत्रतायां "सगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः। विधिना गोत्रतां

---

ज्ञानाभ्यां प्रत्येकमष्टदोषता। व्रीहिभिर्यजेत यवैर्यजेत इति श्रूयते, तत्र व्रीहिप्रयोगे प्रतीतयवप्रामाण्यपरित्यागः अप्रतीतयवाप्रामाण्यकल्पनं यवे उपादीयमाने परित्यक्तयवप्रामाण्योज्जीवनं स्वीकृतयवाप्रामाण्यहानिः। यवैर्यजेतेत्यनेन यवस्य प्रतीतत्वात् व्रीहिभिर्यजेतेत्यनेन व्रीहिमात्रस्य साधनत्वावगमात् यवस्याप्रतीतत्वात् व्रीहिप्रयोगे यवस्य परित्याग एव आसीत्, अत उक्तं परित्यक्तयवेति। 'उज्जीवनं' संस्थापनम्। 'अप्रामाण्यहानिः' प्रामाण्यमित्यर्थः। इति यवे चत्वारो दोषाः, एवं व्रीहावपि चत्वार इत्यष्टौ दोषा इति। एवमिष्टोऽष्टदोषोऽपीति क्वचित् पाठः।

'सपिण्डेषु' सप्तमपुरुषावधिकेषु, सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तत इत्यादिषु इत्यर्थः। सामान्यश्रवणादिति।—सगोत्रत्वासगोत्रत्वाविशेषादित्यर्थः। 'समानगोत्राः' भ्रातृपुत्रादयः। 'असमानगोत्राः' दौहित्रभागिनेयादयः। सगोत्रेष्विति। न सापिण्ड्यं न साप्तपौरुषं पिण्डेनापान्वयरूपं यावन्तः पितृपरास्ते स्युरित्यनेन तस्य पिण्डान्वयरूपपैतृकसापिण्ड्यस्य चरमात्मत्वात्। प्रमाणमित्यस्य समानगोत्र-

यान्ति न सापिण्ड्यं विधीयते इति वृद्धगौतमीयं वचनं प्रमाणम्। गोत्रतां 'सन्ततित्वम्,' दत्ताद्या अपि तनया निजगोत्रेण संस्कृताः। आयान्ति पुत्त्रतां सम्यगन्यबीजसमुद्भवा इति कालिकापुराणात् सन्ततिर्गोत्रजनन-कुलान्यभिजनान्वयाविति त्रिकाण्डीस्मरणाच्च। नतु गोत्रतापदेन गोत्रसम्बन्धो विधीयते सगोत्रेष्वेव पुत्त्रीकरणेन तस्य स्वाहजिकतया विधानायोगात्।

न सापिण्ड्यं विधीयत इत्यसपिण्डस्य पुत्त्रीकरणे, सापिण्ड्यस्य प्रतिग्रहीतुः पाञ्चपौरुषं साप्तपौरुषस्य निषिध्यते असमानगोत्रस्य

---

सायामित्यनेनान्वयः। विधिनेति—विधिनेव वाक्यमात्रस्य साधारण्यात्। 'गोत्रतां' सन्ततित्वं, प्रकरणात् सन्ततिर्गोत्रजननकुलान्यभिजनान्वयाविस्यमरकोषाच्चेति भावः। दत्ताद्या इति—'निजगोत्रेण' प्रतिग्रहीतृगोत्रेणेत्यर्थः। निजगोत्रेण संस्कृता इत्यनेनास्य वचनस्य भिन्नगोत्रविषयता स्पष्टमवगम्यते। स्वाहजिकतया प्राप्ताविति शेषः। विधानायोगात् प्राप्तत्वादिति शेषः, अप्राप्तप्रापकत्वरूपविधित्वासम्भवे अनुवादत्वमात्रान्याय्यत्वादिति भावः।

न सापिण्ड्यमिति, असपिण्डस्य पुत्त्रीकरण इति। सगोत्रसपिण्डपुत्त्रीकरणे पाञ्चपौरुषस्य साप्तपौरुषस्य च अवयवान्वयसापिण्ड्यस्य सद्भावात् निषेधानवकाशात्। पाञ्चपौरुषं साप्तपौरुषमिति।—पाञ्चपौरुषसापिण्ड्यपाद्भिः पितृमातृसम्बन्धात् आसप्तमादविवाह्याः कन्या भवन्ति आपञ्चमादन्येषामिति मतानुपपन्नात् मातृपक्षविषयत्वाद्वा मुख्यकल्पानुकल्पविषयत्वाद्वा, उद्वहेत् सप्तमादूर्द्धं तदभावे तु पञ्चमीम्। पञ्चमीं तदभावे तु पितृपक्षेत्ययं विधिः। सप्तमीं तथा षष्ठीं पञ्च-

पुत्रीकरणे, गोत्ररिक्थे जनयितुर्न भजेद्दत्त्रिमः सुत इति मानवं दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता। पञ्चमी सप्तमी तद्वद्गोत्रं तत्पालकस्य चेति बृहन्मानवं वचःप्रमाणं। सोऽयं मुख्यः कल्पः, तदसम्भवेऽनुकल्पमाह तदभावेऽसपिण्डे वेति। तेषां सपिण्डानामभावेऽसपिण्डोऽपि पुत्रीकार्य्यः। 'असपिण्डाः' सप्तमपुरुषवहिर्भूताः असम्बन्धिनश्च, तेऽपि द्विविधाः समानगोत्रा असमानगोत्राश्चेति। तत्रापि पूर्व्वोदाहृतमेव वचनं प्रमाणम्।

---

गोत्रे तथैव च। एवमुद्वाहयेत् कन्यां न दोषः शाकटायनः। तृतीयाम्वा चतुर्थीम्वा पक्षयोरुभयोरपि। असपिण्डा च या मातुरसगोत्रा च या पितुः। सा प्रशस्ता द्विजातीनां दारकर्म्मणि मैथुने। या तु देशानुरूपेण कुलमार्गेण चोद्वहेत्। नित्यं स व्यवहार्य्यः स्यादेतदेव प्रतीयत १ इति चतुर्विंशतिमतीयात्। सप्तमादूर्द्ध्वमिति मुख्यः कल्पः। तदभावे तु सप्तमीमितिवचनात् पञ्चमादूर्द्ध्वमिति मुख्यः कल्पः, तदभावे पञ्चमीमिति पक्षद्वयेऽप्ययं सर्वमतेनानुकल्प इति केशववैजयन्तीति बोध्यम्। मानवमित्यपिमेशान्वयः। बीजवप्तुः सपिण्डता इत्यनेन चानयोरसगोत्रविषयत्वं स्पष्टमवगम्यत इति समानगोत्रविषयत्वे गोत्ररिक्थे जनयितुरित्यादीनामसङ्गतेः। सोऽयं सगोत्रसपिण्ड इत्यर्थः। 'असम्बन्धिनः' सजातीया इत्यर्थः। सर्व्वेषामेव वर्णानां जातिष्वेव नचान्यत इति वचनात्। तेऽपीति—सप्तमपुरुषवहिर्भूता असम्बन्धिनोऽपीत्यर्थं, अष्टमपुरुषादिरूपसगोत्रसन्ततिपरम्पराः। दौहित्रमातुलपुत्रादयस्तु असमानगोत्राः सजातीयाः असम्बन्धिनः सगोत्रा अपि सम्भवन्ति। असमानगोत्राः साहजिका एवेत्यर्थः। पूर्वोदाहृतेति। ब्राह्मणानां सपिण्डेष्विति वचनम्।

तदयं निर्गलितोऽर्थः। समानगोत्रः सपिण्डो मुख्यः, तदभावे ऽसमानगोत्रः सपिण्डः। यद्यप्यसमानगोत्रः सपिण्डः समानगोत्रोऽसपिण्डश्चेत्युभावपि तुल्यकक्षौ एकैकविशेषणराहित्यादुभयोस्तथापि गोत्रप्रवर्त्तकपुरुषात् सापिण्ड्यप्रवर्त्तकपुरुषस्य सन्निहितत्वेनाभ्यर्हितत्वम्। तेन चासमानगोत्रोऽपि सपिण्ड एव ग्राह्यो मातामहकुलीनः सर्वथा सपिण्डाभावेऽसपिण्डस्तत्रापि सोदकः आचतुर्दशात् समानगोत्रः प्रत्यासन्नः, तस्याभावे असमानोदकः सगोत्र एकविंशात्। तस्याप्यभावे असमानगोत्रोऽसपिण्डश्चेति। तदाह शाकलः। सपिण्डापत्यकश्चैव सगोत्रजमथापि वा। अपुत्त्रको द्विजो यस्मात् पुत्त्रत्वे परिकल्पयेत्। समानगोत्रजाभावे पालयेदन्यगोत्रजमिति। सगोत्र इत्यनेन सोदकसगोत्रौ गृह्येते। अत्र च पूर्व्वपूर्व्वस्य प्रत्यासत्त्यतिशयेन निर्द्देश इति। तदेवाह वसि-

---

तदयमिति। समानगोत्रः सपिण्डो भ्रातृपुत्त्रादि। असमानगोत्र सपिण्डो दौहित्रमातुलपुत्त्रादि। 'तुल्यकक्षौ' तुल्यबलावित्यर्थः। एकैकेति। असमानगोत्रसपिण्डे समानगोत्रत्वविशेषणराहित्य सगोत्रसपिण्डे सपिण्डत्वविशेषणराहित्यञ्चेत्यर्थः। गोत्रप्रवर्त्तकपुरुषात् समानोदकभावस्तु निवर्त्तेताचतुर्दशादिति, जन्मनाम्नो रस्मृतेरिके तत्परं गोत्रमुच्यते इत्युक्तपञ्चदशपुरुषादित्यर्थः। सापिण्ड्यप्रवर्त्तकपुरुषस्य सन्निहितत्वेन सप्तमान्तर्गतत्वेन पञ्चमान्तर्गतत्वेन यद्दातृदेयभोक्तृपिण्डदातृत्वेन च अभ्यर्हितत्वादित्यर्थः। एकविंशादिति।—सप्तधिगुणितत्वात सपिण्डसमानोदकयोः सप्तसङ्ख्यातत्वात तत्त्वादेकविंशत्यादित्यर्थः। सगोत्रजमिति—सोदकेति—सोदक-सगोत्रयो सगोत्रजस्य विशेषा

ष्टोऽपि। अदूरबान्धवं बन्धुसन्निकृष्टमेव प्रतिगृह्णीयादिति। अस्यार्थः अदूरश्चासौ बान्धवश्चेत्यदूरबान्धवः सन्निहितः सपिण्ड इत्यर्थः। सान्निध्यञ्च द्विधा सगोत्रतया स्वल्पपुरुषान्तरेण च भवति। तत्र सगोत्रः स्वल्पपुरुषान्तरः सपिण्डो मुख्यः, तदभावे बहुपुरुषान्तरोऽपि सगोत्रः सपिण्डः, तदभावे असमानगोत्रः सपिण्डस्तस्याप्यभावे बन्धुसन्निकृष्टः सपिण्ड. बन्धूनां सपिण्डानां सन्निकृष्टः सपिण्डः स्वस्यासपिण्डः सोदकः इत्यर्थः पर्यवस्यति। तत्रापि सन्निकर्षो द्विविधः, सगोत्रतया स्वल्पपुरुषान्तरेण च, स्वस्यासपिण्डोऽपि स्वसमानगोत्रः स्वल्पपुरुषान्तरः सपिण्डानां सपिण्डो मुख्यस्तदभावे बहुपुरुषान्तरोऽपि सगोत्रः सपिण्डसपिण्ड. सोदक इति यावत्। सपिण्डसोदकासम्भवे समानगोत्र एकविंशात् ग्राह्यः। तदभावेऽसमानगोत्रोऽसपिण्डोऽपि ग्राह्यः। तदभावेऽसपिण्डेनेति शौनकीयात्। सन्देहे चोत्पन्ने दूरबान्धवं शूद्रमिव स्थापयेदिति वशिष्ठलिङ्गाच्च। दूरे बान्धवा यस्यासौ 'दूरबान्धव.' गोत्रसापिण्ड्याभ्यामसन्निहित इत्यर्थः। सन्देहोऽत्र कुलशीलादि विषयः। स चासपिण्डेऽसगोत्रे च भवतीति सोऽप्यनुज्ञायते।

अन्यत्र तु न कारयेदिति। यद्यपि सपिण्डासपिण्डेभ्योऽन्यो न सम्भवति तथापि सर्वेषामपि वर्णानां जातिष्वेव न त्वन्यत इति वाक्यशेषेण सपिण्डासपिण्डानां सजातीयत्वेन विशेषणार-

---

दित्यभिप्राय। दूरे इति—दूरे प्रतिग्रहितुर्दूरे स्थिता इति शेष, 'बान्धवा' सपिण्डा ग्राह्यास्य इति शेष।

असमानजातीयाः सपिण्डा असपिण्डाश्च व्यावर्त्तन्ते, अप्रतिषिद्धमनुमतं भवतीति न्यायेनानुकल्पतया तत्प्राप्तिसम्भवात्। अतएव वृद्धगौतमः। यदि स्यादन्यजातीयो गृहीतो वा सुतः क्वचित्। अंशभाजं न तं कुर्य्याच्छौनकस्य मतं हि तदित्यसमानजातीयस्यांशभाक्त्वं निषेधति, तस्मादसमानजातीयो न पुत्त्रीकार्य्य इति सिद्धम्। अतएव मनुः। सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुत इति। 'सदृश' सजातीयम्, सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिरिति योगीश्वरस्मरणात्। यत्तु मनुनैव क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात्। स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वेत्युक्तम् तत्र गुणैः सदृशोऽसदृशो वेति व्याख्येयं न जात्येति। यत्तु सदृश न जातितः किन्तर्हि कुलानुरूपैर्गुणैः, तेन क्षत्रियादिरपि ब्राह्मणस्य पुत्त्रो युज्यत इति मेधातिथिना व्याख्यातम्, यच्च शूद्रोऽपि किल पुत्त्रो भवतीत्यभिप्राय इति कल्पतरुव्याख्यानम्, तदुभयमपि सजा-

असमानजातीयाः सपिण्डा इति।—'असमानजातीयाः सपिण्डाः' ब्राह्मणादेः क्षत्रियादिपुत्रादयः। "तिस्रो वर्णानुपूर्व्येण" इत्यादिवचनेन ब्राह्मणादेर्भिन्नजातीयविवाहप्रतिपादनात् तस्य क्षत्रियादिपुत्रसम्भवात् सापिण्ड्यन्तु तेषां अवयवान्वयरूपं न तु पिण्डान्वयरूपं, तेषामन्यजातीयत्वेन पित्रादिपिण्डदानानधिकारात्। 'अप्रतिसिद्ध' विधिनिषेधाविषयमित्यर्थः। 'अंशभाक्' अंशभाजमिव न तु पुत्रत्वमित्यर्थः, गोत्ररिक्थानुगः पिण्ड इत्यनेन गोत्रद्रव्यधनग्रहणपिण्डाधिकारयोः पुत्रप्रयोजकत्वावगमात्।

तीयेष्वयं प्रोक्तस्तनयेषु मया विधिरित्युदाहृतयोगीश्वरवचनविरोधात् जातिष्वेव न चान्यत इति शौनकवचनविरोधाच्चोपेक्ष्यम्। यत्तु मनुना स्वयं दत्तस्य शौद्रस्य षड्दायादबान्धवा इत्यत्र शौद्रस्य पुत्रप्रतिनिधित्वेन परिगणनं कृतं तच्छूद्रेण दास्यामुत्पादितस्य अनूढोत्पन्नस्य मुख्यपुत्रत्वाभावात् पुत्रप्रतिनिधित्वमभिप्रेत्येति व्याख्येयम्, जातोऽपि दास्यां शूद्रेण कामतोऽंशहरो भवेत्। मृते पितरि कुर्य्युस्तं भ्रातरस्त्वर्द्धभागिनम्॥ अभ्रातृको हरेत् सर्व्वं दुहितॄनां सुतादृते इति योगीश्वरस्मरणात्। तस्मात् सदृशं दातुः प्रतिग्रहीतुश्च सवर्णमित्यपरार्कव्याख्यैवात्र साधीयसी। याज्ञवल्क्योऽपि सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिरिति।

सन्निहितसगोत्रसपिण्डेषु च भ्रातृपुत्त्र एव पुत्त्रीकार्य्य इति। अभ्युपगतञ्चैतद्विज्ञानेश्वराचार्य्यैरपि भ्रातृपुत्र एव पुत्त्रीकार्य्य इति। अत्र सोदरभ्रातृपुत्त्र एव पुत्त्रीकार्य्य इत्याह, मनुः। भ्रातॄणामेकजातानामेकश्चेत् पुत्त्रवान् भवेत्। सर्व्वे ते तेन पुत्त्रेण पुत्त्रिणो मनुरब्रवीदिति॥ अत्र भ्रातॄणां प्रतिग्रहीतृत्वप्रतिपादनात् ग्राह्यत्वाभावोऽवगम्यते। एकजातानामित्यनेनैकेन पित्रा एकस्यां मातरि जातानामेव ग्रहीतृत्वं न भिन्नोदराणां भिन्न-

भ्रातृपुत्त्र एवेति। तत्सद्भावेऽन्यो न ग्राह्य इत्येवकारेण द्योत्यते। भ्रातॄणामिति।—अन्यथा सपिण्डत्वेन तस्यापि ग्राह्यत्वापत्तेरिति भावः। एकेनैकस्यां मातरीति—तथाचैकश्रेणेय तदर्थलाभ इति भावः। भिन्नपितृकाणामिति—द्वौ सुतौ विवदेयातां द्वाभ्यां जातौ स्त्रिया धने

पितृकाणां वेति गम्यते। भ्रातॄणामिति पुंस्त्वनिर्देशात् पदद्वयो-पादानसामर्थ्याच्च सोदराणां भ्रातृभगिनीनामपि परस्परपुत्रपद्वी-त्वलाभावोऽवगम्यते। तदाह वृद्धगौतमः। ब्राह्मणादिचये नास्ति भागिनेयः सुतः क्वचिदिति भागिनेयपदं भ्रातृपुत्रस्याप्युपलक्षणम्। तेन भगिन्या भ्रातृपुत्रो न ग्राह्य इत्यर्थः सिद्ध्यति, भ्रातॄणामेव पद्वीत्वप्रतिपादनात्। यद्यपि भ्रातृपुत्रौ स्वसृदुहितृभ्यामित्यने-नैकशेषोऽवगम्यते ततश्च भ्रातृभगिनीपुत्रयोः भ्रातृभगिनीभ्यां पर-स्परं पुत्रीकरणमवगम्यते, तथाप्येकजातानामिति भ्रातृविशेषणेन एकं जातं जातिर्येषां ते एकजाताः, जातिर्जातिश्च सामान्यमिति कोषात् तेषां समानजातीयत्वप्रतिपादनात् भ्रातॄणां पुंसां भ्रातृपुत्रस्य भगिनीनाञ्च स्त्रीणां भगिनीपुत्रस्य पुत्रीकरणं सिद्ध्यति न भ्रातृ-पुत्रस्य भगिन्या भगिनीपुत्रस्य भ्रात्रा वा पुत्रीकरणं सम्भवति स्त्रीपुंस्त्वजातिभेदात्। ननु सकृदुच्चरितस्य एकजातानामित्येकस्य पदस्य सोदरत्वं समानजातीयत्वञ्चेत्यर्थद्वयं न सम्भवति सकृदुच्चरितः

---

इत्याद्युक्तानां भ्रातॄणामित्यर्थः। तेषामपि एकमातृप्रभवत्वेन भ्रातृ-शब्दार्थत्वात्। पुंस्त्वनिर्देशादिति—भ्राता भ्रातृपुत्रस्य ग्राह्यत्वे सिद्धे विधानेनैवान्यत्र प्रतिषेधसिद्धेरिति न्यायेन भगिन्या भ्रातृ-पुत्रस्य भ्राता वा भगिनीपुत्रस्य ग्राह्यत्वाभावोऽवगम्यते इति भावः। पदद्वयोपादानसामर्थ्याच्चेति।—अन्यथा एकजातानामिति मात्रदिष्टस्तु वृथा चैकजातानामिति विशेषणवैयर्थ्यात् सोदरभ्रातृपुत्रस्य लाभ सुलभ एवेति भावः। एकशेष इति—भ्रातरश्च स्वसारश्चेति विग्रहा-देकशेषः। एकजातानामित्येकस्येति।—अत्र शङ्कसंवाद दर्शयति यसं-वष्टीत्यादिना।

शब्दः सकृदेवार्थं गमयतीति न्यायविरोधादिति चेन्न। असंसृष्ट्यपि चाददात् संसृष्टो नान्यमातृज इत्यत्र संसृष्टपदस्य सोदरपरत्वेन असंसृष्टपरत्वेन च विज्ञानेश्वराचार्य्यैर्व्याख्यातत्वादिहापि तथैवेति न दोष इत्यलम्।

बहुवचनं द्वित्वस्याप्युपलक्षणम्, बहुषु द्वयोः सम्भवात्। यदि हि द्विपिता स्यादेकैकस्मिन् पिण्डे द्वौ द्वावुपलक्षयेदिति द्विपितृकत्वसम्भवाच्च। एक एकोऽपि चेदित्यनेन द्वयोर्बहूनाम्वा पुत्रवत्त्वे सुतरां सुकरं पुत्रग्रहणमन्येषामपुत्राणां गमयति नैकीयैकपुत्रग्रहणं व्यावर्त्तयति एकपदोपादानसामर्थ्यात् तेनेत्येकत्वनिर्द्देशाच्च। पुत्रः पुत्रौ पुत्रा वा विद्यन्ते यस्येति मतुप्। तेन चैकस्यापि पुत्रस्य दानाभ्यनुज्ञाने नत्वेवैकं पुत्रं दद्यादिति निषेधस्याचानवकाशः, स हि सन्तानाय पूर्वेषामिति हेतुवचनप्रतिपादितपित्रादिपूर्वसन्तानस्य पितृद्वयसाधारणेनापि पुत्रेण निर्वाहादुक्तनिषेधस्य आवतिरिक्त-

---

बहुवचनं।—भ्रातॄणामित्यत्र बहुवचनं द्वित्वस्याप्युपलक्षणमिति। बहुष्विति—तथाच बहुषु द्वित्वस्य प्रत्यक्षत्वादिति भावः। द्विपितावेति। द्विपितेत्यार्थं। अथात्र एक इत्यस्य एकोऽपि चेदित्यर्थकत्वे कैमुतिकन्यायादेकस्याविवक्षितत्वेन द्वयोर्बहूनाञ्च पुत्रवत्त्वे अन्येषां पुत्रग्रहणमस्तु गुरुन्वेत्यादिवचनबोधितगुर्व्वादिहननमिव एकस्य पुत्रवत्त्वे तु तत्पुत्रग्रहणमन्येषां माभूदिति चेन्न एकपदोपादानवैयर्थ्यात्। तेनेत्येकवचनान्ततच्छब्देन अन्येषामेकीयैकपुत्रग्रहणे मनोरभिप्रेतत्वात् तथाच वचनेऽपि न ग्रहीतः केवलं द्वयोर्बहूनां वा पुत्रवत्त्वेऽन्येषां पुत्रग्रहणप्राप्तये आर्थतया अर्थः संग्रह इति कैमुतिकन्यायावसरः। ननु

विषयतासिद्धेः। किञ्च दानस्य स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनरूपत्वात् तस्य चानेन निषेधात् प्रकृते चैकस्योभयसाधारणीकरणेन स्वत्वनिवृत्त्यभावात् कन्यादान इव दानपदार्थस्य गौणत्वात्। पुत्रपदस्यौरसे मुख्यत्वादौरसत्वमेव पुत्राणां सिद्ध्यति। तेन च भ्रातृकृतपुत्रप्रतिनिधीनां परिग्रहणाभावोऽवगम्यते। भवेदित्यनेन पुत्रवत्तायाः सत्ताप्रतिपादनात् भूतपुत्रत्वं भविष्यत्पुत्रत्वञ्च व्यावर्त्तयति। तेन चातीतेन भ्रातृपुत्रेणान्यस्य भ्रातुर्न पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखमित्यादि फलसम्बन्धः न चानागतपुत्रप्रतीक्षायां पुत्रान्तरपरिग्रह इति।

तच्छब्देनापुत्राणामेव भ्रातॄणां परामर्शात् जनकस्य स्वपुत्रसम्बन्धाभावव्यावर्त्तनाय सर्वे इति। त इत्यत्र स च, तौ च, ते च इत्येकशेषादेकस्य द्वयोर्बहूनां वा पुत्रेच्छया तत्पुत्रीकरणं भवति। तेनेति—येन जनकस्य पुत्रवत्त्वं तेनैव सर्वेषामपीति। पुत्रेणेत्येकत्वनिर्द्देशादेकस्याप्यनेकपुत्रत्वाभिधानेन नत्वेवैकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वेत्येतन्निषेधस्याचानवकाश इत्युक्तमेव। तथाच कालि-

---

नत्वेवैकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा इत्यस्य भ्रातृव्यतिरिक्तविषयत्वे जनकपरिग्रहोद्देश्यमभिप्रेत्य सजातीयमात्रद्वारामुष्यायणता विरुद्धेत इत्यतं आह किञ्चेति। पुत्रपदस्येति।—पुत्रवान् भवेदित्यन्नित्यादि। 'चातीतेन' मृतेन इत्यर्थः।

तच्छब्देनेति।—सर्वे ते इत्यत्र त इति तच्छब्देन इत्यर्थः। अनेकपुत्रत्वाभिधानेन इति।—अनेकेषां पुत्रत्वाभिधानं अनेकपुत्रत्वाभिधानं तेन। इत्युक्तमेवेति।—भ्रातृव्यतिरिक्तविषयतासिद्धेरित्यनेनोक्तं प्राक्

कापुराणे वेतालभैरवयोः शङ्करात्मजयोरेकेन पुत्रेणोभयोः पुत्रवत्त्वं लिङ्गं दृश्यते। तथ्य ऊचुः।—अपुत्त्रस्य गतिर्नास्ति श्रूयते लोकवेदयोः। वेतालभैरवौ यातौ पुरा वै तपसे गिरिं॥ पूर्वं त्वकृतदारौ तौ तयोः पुत्रा न च श्रुताः। तेषान्तु सम्यगिच्छामः श्रोतुं संस्थानमुत्तमं॥ मार्कण्डेय उवाच। अपुत्त्रस्य गतिर्नास्ति प्रेत्य चेह च सत्तमाः। स्वपुत्रैर्भाव्यपुत्त्रैश्च पुत्त्रवन्तो हि स्वर्गताः॥ सम्यक् सिद्धिमवाप्येह यदा वेतालभैरवौ। हरस्य मन्दिरं यातौ कैलासं प्रति हर्षितौ॥ तदा हरस्य वचनात् नन्दी तौ रहसि द्विजाः। प्राहेदं वचनं तथ्यं सान्त्वयन्निव बोधयन्॥ नन्द्युवाच। अपुत्त्रौ पुत्त्रजनने भवन्तौ शङ्करात्मजौ। यतेतां जातपुत्त्रस्य सर्वत्र सुलभा गतिः। मार्कण्डेय उवाच। तस्येदं वचनं श्रुत्वा नन्दिनः प्रीतमानसौ। एकमेव करिष्यावो नन्दिनस्त्वित्यभाषताम्॥ ततः कदाचिद्वेश्यां भैरवो मैथुनं गतः॥ तस्यां स जनयामास सुवेशं नाम पुत्त्रकम्॥ तमेव चक्रे तनयं वेतालोऽपि स्वकं सुतम्। ततस्तौ तेन पुत्त्रेण स्वर्ग्यां गतिमवापतुरिति॥

नन्विदमेकस्यानेकपुत्त्रत्वं किं युगपदुत्पत्स्यतेऽथवा क्रमेण, नाद्यः युगपत् प्रतिगृह्णीयुरिति विध्यभावात्, नापरः पूर्वसंस्कारविरुद्धे

इति। एकस्यानेकपुत्रत्वे पौराणिकलिङ्गं दर्शयति—अपुत्त्रस्येति। अकृतदाराविति।—एतद्धि अकृतदारस्यापि पुत्त्रग्रहणे लिङ्गं, तेन च कृतदारस्यापि सदारमरणे साहचर्यिकन्यायात् पुत्त्रग्रहणं निरुपद्रवमिति पर्यवसितं, अपुत्त्रस्य हेतोरविशेषात्।

एकं इति। पूर्वसंस्कारसस्कृते इत्यर्थः। तदिति।—तथाच जातकर्मादिसंस्काराणां शरीरशुद्धिजनकत्वात् तैरेव देहशुद्धेर्जाता-

तत्सजातीयसंस्कारान्तरानुत्पत्तेरिति चेन्न। सप्तदशावरास्तु विंशतिपरमाः सत्रमासीरन्निति वत् तत्सर्वशब्दयोर्द्वन्द्वे कर्मवेण प्रतिग्रहीतृभ्रातृसाहित्यस्याच विवक्षितत्वात्, तेन दानमपि सहितेभ्य एव सिद्धति, यथा तुलापुरुषे सहितानामेव ऋत्विजां सम्प्रदानत्वं प्रतिग्रहीतृत्वञ्चेति। तदाहुः—इत्यावाह्य सुरान् दद्याद्दलिगभ्यो हेमभूषणमित्यत्र ऋत्विग्भ्य इति बहुवचनान्मिलितानामेव सम्प्रदानत्वम्। तेन च सर्वेषामुपरि गुरुहस्तं कृत्वा तदध:क्रमेण ऋत्विग्यादीनामृत्विजां हस्तानाधाय भूषणानि देयानीति वाचस्पतिमिश्राः। नच युगपदनेकपुत्त्रत्वानुपपत्तिरपि, युगपत्प्रतिग्रहेण द्रौपदीभार्य्यात्ववत् अस्य विलक्षणस्यैवानेकपुत्त्रत्वस्य प्रसिद्धश्रामुष्यायणत्ववत् स्वीकारात्।

पुत्त्रिण इत्यत्र पुत्त्र एषामस्तीति भवनार्थकेनास्तिना पुत्त्रभवनप्रतिपादनात् अभावितस्य च भवनायोगात् प्रतिग्रहीतृव्यापार

---

त्वात् अशुद्धिरूपप्रतियोग्यभावात् तत्सजातीयसंस्कारस्य निरर्थकत्वादित्यर्थः। सप्तदशावरा इति।—सप्तदशन्यूनाश्चतुर्विंशतेरधिका न भवन्तीत्यर्थः, मध्ये यथाकाममिति। उपासीरन् कुर्युरित्यर्थः। तुलापुरुषेति।—तुलापुरुषदाने इत्यर्थः। सम्प्रदानत्वमिति।—वचनं प्रमाणयति इत्यावाह्येति। 'गुरुहस्तं' गुरोः प्रधानस्य ऋत्विजो हस्तमित्यर्थः। 'विलक्षणस्य' असन्यसाधारणस्येत्यर्थः।

' अभावितस्येति।—अजातस्य, यथाविध्यपरिग्रहीतस्येति यावत्।' प्रतिग्रहीतृव्यापार इति।—तथाच स्वात्मपुत्त्रस्य यथाविधि परिग्रहेणैव पुत्त्रत्व न तु तत्सत्तामात्रेणैवेति भावः। अत्र प्रमाणं दर्शयति तथा-

श्चाविध्यते। तथाचात्रिः। अपुत्त्रेणैव कर्त्तव्यः पुत्त्रप्रतिनिधिः सदेति। वशिष्ठोऽपि पुत्त्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि चावेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा अदूरबान्धवं बन्धुसन्निकृष्टमेव प्रतिगृह्णीयादिति। शौनकोऽपि। दातुः समक्षं गत्वा तु पुत्त्रं देहीति याचयेत्। याचयेदिति प्रयोजके णिच, तेन याचनार्थहृत ब्राह्मणद्वारा याचयेदिति। एतेनाहतस्यैव भ्रातृपुत्त्रस्य पितृव्य पुत्त्रत्वम्। अपुत्त्रस्य पितृव्यस्य तत्पुत्त्रो भ्रातृजो भवेत्। स एव तस्य कुर्वीत श्राद्धपिण्डोदकक्रियामितिवृद्धपराशरस्मरणात् इतिचोद्यं निरस्तम्, प्रतिग्रहीतृव्यापारं विना तत्पुत्त्रत्वानुपपत्तेः।

नच गूढोत्पन्नदत्तात्मनोः कर्तृव्यापाराभावः, गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुत. स्मृत इति दत्तात्मा तु स्वयं दत्त इति कर्तृव्यापाराश्रवणादिति वाच्यम्, तत्रापि फलस्य क्रियासामानाधिकरण्यान्यथानुपपत्त्या तत्कल्पनात्। तस्मात् भ्रातॄणामेकजातानामिति, अपुत्त्रस्य पितृव्यस्येतिवचनं न यथाश्रुतमेवार्थवत् त्रयोदशपुत्त्रापत्तेः। नचेष्टापत्तिः, पुत्त्रान् द्वादश यानाह नृणां स्वायम्भुवो मनुः। तेषां षड्बन्धुदायादाः षडदायादबान्धवा इति

---

चात्रिरिति। कर्त्तव्य इत्यनेन कृतिरूपप्रतिग्रहीतृव्यापारो बोध्यते। अपुत्त्रस्य पितृव्यस्येति।—अपुत्त्रस्य पितृव्यस्य भ्रातृजस्तत्पुत्त्रोभवेदित्यन्वय।

फलस्येति। 'क्रिया' व्यापार। तथाच व्यापारं विना फलानुपपत्तेः पुत्त्रत्वफलस्योत्पत्तिदर्शनात् तत्रापि प्रतिग्रहीतृव्यापारोऽवश्यं वक्तव्य

द्वादशसङ्ख्याविरोधात्। नन्वस्त्येव सङ्ख्याविरोधः, औरसः पुत्त्रिका

---

इति भावः। सङ्ख्येति।—द्वादशेत्यादिः। केषाञ्चिदिति।—त्रयोदश-संख्यावचने पुत्त्रिकाबीजजयोरौरसेऽन्तर्भावात्। औरसादिस्वरूप-माह विष्णुः।—स्वे क्षेत्रे संस्कृतायां उत्पादितः स्वयमौरसः प्रथमः। कानीनादिव्यति-प्रसङ्ग-वारणाय स्वयमिति, काकाक्षिगोलकन्यायात् संस्कृतायामित्यत्रापि स्वयमित्यस्य परामर्शः, कुण्डगोलकयोरतिप्रसङ्ग-वारणाय मैनर्भवे चातिप्रसङ्गनिरस्त्यै स्वमानसस्कृतेति वक्तव्यं, तथाच स्वमानवोर्चे धर्मपत्न्यां स्वमानसंस्कृतायां स्वयमुत्पादित औरस इति सिद्धम्। नियुक्तायां सपिण्डेनोत्तमवर्णेन चोत्पादितः क्षेत्रजो द्वितीयः। वाग्दानानन्तरमेव मृतपतिकायां क्लीवभार्य्यायां व्याधितभार्य्यायां वा पुत्रोत्पत्त्यर्थं गुरुभिर्नियुक्तायां गुर्व्वनुज्ञातेनैव देवरेण कनिष्ठेन ज्येष्ठेन वा भर्त्तुर्भ्रात्रा तदभावे सपिण्डेन तस्याप्यभावे सगोत्रेण तस्याप्यभावे चान्येनोत्तमवर्णेन ब्राह्मणेन वा य उत्पादितः स मृतस्य क्लीवादेश्च क्षेत्रजः पुत्रो भवति इत्यर्थः। स्वयमुत्पादनाभावेनास्यौरसात् द्वितीयत्वं। औरसो धर्म्मपत्नीजस्तत्समः पुत्त्रिकासुतः। क्षेत्रजः क्षेत्रजातस्त्विति याज्ञवल्क्योये यत् क्षेत्रजस्य तृतीयत्वमुक्तं तत् वाग्दत्ताभिन्नायां विषयं। तत्र भार्य्यं संस्काराभावेन स्वयमुत्पादनाभावेन च कन्यादयान्तरितत्वात् विप्र-कर्षात् तृतीयत्वमुक्तं युक्तमेव। क्षेत्रजः पुत्रः कंविदा उभयोरपि द्यामुष्यायणो भवति, यथाह मनुः।—क्रियाभ्युपगमात् क्षेत्रं बीजार्थे यत् प्रदीयते। तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव चेति। 'क्रिया' सन्वित्। यत्तु औरसो धर्मपत्नीजस्तत्समः पुत्त्रिकासुत इति पुत्त्रिकापुत्त्रस्य द्वितीयस्थाने गणनं तत् क्लीबपुत्त्रिकापुत्त्रविषयम्, तस्याः स्वोत्पन्नत्वेन परोत्पन्नात् क्षेत्रजात् उत्कृष्टत्वात्। पुत्त्रिकापुत्त्र-स्तृतीयः। मत्स्यैर्व्यत्पन्नस्वोत्पन्नत्वयोरभावेन कन्यादयान्तरितत्वात्

नन्विदमप्रयोजकं यत्पिण्डरिक्थाभावादपुत्त्रत्वमिति अप्रश-स्तास्तु कानीनगूढ़ोत्पन्नसहोढ़जाः। पौनर्भवश्च नैवैते पिण्डरिक्थां-शभागिन इति विष्णुना कानीनादीनां पुत्त्रत्वेऽपि पिण्डरिक्थाभाव-दर्शनात्। तथा पिण्डरिक्थाभावेऽप्यक्तस्यैव भ्रातृव्यस्यास्तु पुत्त्रत्वं का क्षतिरिति चेन्नैवं। पिण्डदोऽंशहरश्चैषामित्यनेन पिण्डरिक्थ-भागित्वं हि पुत्त्रत्वस्य प्रयोजकमुक्तं तदभावे क्लीवादेरिव पुत्त्रत्व-स्वरूपसत्तामात्रस्याप्रयोजकत्वात्, अपुत्त्रेणैव कर्त्तव्यः पुत्त्रप्रतिनिधिः सदेति विधिप्रत्ययश्रवणेनाक्तस्य पुत्त्रत्वायोगाच्च। नच भ्रातृव्येत-रविषयोऽयं विधिरिति वाच्यम्, सङ्कोचे प्रमाणाभावात्, प्रत्युत एकमेव कारिष्याव इत्युपक्रम्य तमेव चक्रे तनयं वैतालोऽपि स्वकं सुतमिति वैतालीयभैरवपुत्त्रपुत्त्रीकरणलिङ्गविरोधाच्च। किञ्च यत्र दशानां सोदराणां मध्ये पञ्च प्रत्येकं दशपुत्त्राः पञ्च चात्यन्त-मपुत्त्रास्तत्र पञ्चानामपुत्राणां प्रत्येकं पञ्चाशत्पुत्त्रतापत्तिः, पञ्चा-शतश्च पुत्त्राणां प्रत्येकं प्रत्येकं दशपितृकतापत्तिरित्याद्यनेकोपप्लवः।

नचेष्टापत्तिः पुत्त्रप्रतिनिधिः कार्य्य इत्युपादेयगतैकत्वविव-क्षणात्। एकश्चेत् पुत्त्रवान् भवेत् सर्वे ते तेन पुत्त्रेणेत्यत्र पुत्त्रपुत्त्र-वतोरुभयोरपि प्रत्येकं पुनैकत्वविरोधाच्च। न च स्वपुत्त्रे भ्रात-

---

पिण्डरिक्थभाज इति।—पुत्त्रत्वमिति शेषः। सङ्कोच इति।—अपुत्त्रेणैव कर्त्तव्य इति वाक्यस्य भ्रातृव्येतरविषयत्वे प्रमाणाभावात्। वैता-लीयेति।—तमेव चक्रे तनयं इत्यत्र चक्रे इत्यनेन प्रतिपद्योतृत्वं-प्र.दत्त स्वपुत्त्रकरणात्। उपादेयगतैकत्वेति इति।—पुत्त्र प्रतिनिधिः कार्य्य इति विधेः प्रतिनिधिविधिविषयस्य सोदरादिपरत्वादिति भावः।

चैव पुत्रवन्तो हि स्वर्गता इत्यत्र भ्रातृपुत्राणां बहुत्वश्रवणात् सहस्रोऽपि भ्रातृपुत्रा अकृता एवैकस्य पुत्रा भवेयुरिति वाच्यम्, तस्य लौकिकसिद्धबहुत्वानुवादकार्थवादगतत्वेनाविवक्षितत्वात्। अस्मत्-पक्षे तु एकेनैव प्रकृतनित्यविधिसिद्धावनेकोपादानस्य वैयर्थ्यादशास्त्रीयत्वाच्च। तस्मात् सन्निहितसगोत्रसपिण्डेषु भ्रातृपुत्र एव पुत्रीकार्य्य इति स्थितम्। ततश्च कृतत्वेन प्रथमं धनपिण्डभागित्वं अकृतत्वेन च स्वस्थान इति विष्णुवचनन्तु पूर्वपूर्वपरिगणितपुत्रसद्भावविषयमिति न कोऽपि विरोधः। नन्वेवं सर्वासामेकपत्नीनामेका चेत् पुत्रिणी भवेत्। सर्वास्तास्तेन पुत्रेण पुत्रिणी मनुरब्रवीदित्यत्राप्यकृतस्य पुत्रत्वं न स्यात्। नचेष्टापत्तिः, आचारविरोधात्। पितृपत्न्यः सर्वा मातर इति पितृपत्नीत्वमात्रनिमित्तकमातृत्वव्यपदेशविरोधाच्चेति चेत् नैवं। सपत्नीपुत्रस्य साक्षाद्भर्त्रवयवारब्धतया अकृतस्यापि पुत्रत्वसम्भवात् वचनन्तु नियमार्थं इत्युक्तमेव। भ्रातृव्ये तु दम्पत्योरन्यतरस्याप्यवयवसम्बन्धाभावात् नाकृतस्य पुत्रत्वमिति।

---

लौकिकसिद्धेति। लोके बहुभिरपुत्रैर्भ्रातृपुत्राः परिगृह्यन्ते इत्यभिप्रायेण भ्रातृपुत्रैरिति बहुवचनं कृतं। अतएव बहुत्वस्य लोकप्राप्तत्वादनुवादः, अतएवोच्यते लौकिकसिद्धेत्यादि। तथाचानेकाभिप्रायेण बहुवचनं कृतमिति फलितं। प्रकृतनित्यविधीति।—पुत्रमुत्पादयेदिति प्रकृतनित्यविधिसिद्धावित्यर्थः। स्वस्थान इति।—पत्नी दुहितरश्चैवेत्यादिवचनोक्ते इत्यर्थः। विष्णुवचनन्त्विति।—अप्रशस्तास्तु कानीनगूढोत्पन्नसहोढजाः। पौनर्भवस्तु नैवैते पिण्डरिक्थांशभागिन इति विष्णुवचनमित्यर्थः। नैवमिति।—अकृतस्य पुत्रत्वं

शक्तेर्नियामकत्वात्। शूद्रजातिष्विति। अत्रापि प्रत्यासत्तिः पूर्ववदेव। गुरुगोत्राश्रवणाच्च गुरुगोत्रसमेऽपि वेत्यस्यात्राप्रवृत्तिः। तेन शूद्रजातिमात्र इति सिद्ध्यति।

तदाह ब्रह्मपुराणम्। शूद्राणां दासवृत्तीनां परपिण्डोपजीविनां। परायत्तशरीराणां न कश्चित् पुत्र इत्यपि। तस्मात् दासस्य दास्याश्च जायते दास एव हीति। त्रैवर्णिकानां त्रैवर्णिकानुलोमजानाञ्चोत्कृष्टत्वात् प्रतिलोमजानाञ्चापकृष्टत्वात् न कश्चित् पुत्रः कर्त्तुं शक्यते इति शूद्र एव पुत्रीकार्य्यः दासदासवत् पन्नत्वादिति। ननु क्षत्रियादिवाक्यत्रयं नारम्भणीयं न्यायसाम्येन पूर्ववाक्यादेव तदर्थसिद्धेः आरम्भो वापि सर्वेषाञ्चैव वर्णानामित्यनेन पौनरुक्त्या-

---

अत्रापीति।—वैश्यजातावपीत्यर्थः। राजन्यविशामिति।—इतिशब्देन प्रश्यति इत्याश्वलायनप्रतीकपरिग्रहः। अत्राप्रवृत्तिरिति।—अत्र शूद्रजातावित्यर्थः।

त्रैवर्णिकानामिति।—ब्राह्मणक्षत्रियवैश्यानामित्यर्थः। त्रैवर्णिकानुलोमेति।—मूर्द्धावसिक्तादीनामित्यर्थः। प्रतिलोमजानां रथकारादीनामित्यर्थः। 'कश्चित्' सजातिभिन्नः। क्षत्रियादिवाक्यत्रयमिति।—क्षत्रियाणां सजातौ वै गुरुगोत्रसमेऽपि वेत्येकं वैश्यानां वैश्यजातिष्वित्यपरं शूद्राणां शूद्रजातिष्वित्येकञ्चेति त्रयमित्यर्थः। नारम्भणीयं इति।—न वाच्यमित्यर्थः। पूर्ववाक्यादेवेति।—ब्राह्मणानां सपिण्डेषु इति शौनकीयपूर्ववाक्यात् इत्यर्थः। ननु ब्राह्मणानां सपिण्डेषु इति पूर्ववाक्ये ब्राह्मणपदश्रवणात् वचनस्य तद्विषयत्वमेव, क्षत्रियाणां प्राधान्ये क्षत्रियाणामित्यादिवचनं कथं नारम्भणीयमित्यत आह आरम्भो वेति। सर्वेषाञ्चैव वर्णानामिति।—क्षत्रियाणां सजातौ वा इत्या-

थेति चेत् नैव। क्षत्रियादिपदैः क्षत्रियादिसमानधर्मकमूर्द्धावसिक्तादीनामपि प्राप्तत्वात्। ब्राह्मणेन क्षत्रियायामुत्पादितः क्षत्रिय एव भवति, क्षत्रियेण वैश्यायां वैश्य एव, वैश्येन शूद्रायां शूद्र एव भवतीति शङ्खस्मरणात्। सजाताविति क्षत्रियादिसमानधर्मत्वेऽपि मूर्द्धावसिक्तादीनां क्षत्रियादिपुत्रत्वाभावबोधनायेति। तिस्रो वर्णानुपूर्व्येणेत्यानुपूर्व्यलिङ्गात्। न च सर्व्वेषामित्यनेन पौनरुक्त्यं तत्र वर्णानामनुलोमानाञ्च सजातिनियमानुवादेन प्रतिलो-

---

दिभिन्नदर्थाभिधानेन पौनरुक्त्याचेति भावः। क्षत्रियादिसमानेति।—तथाच ब्राह्मणानामित्यादिवचने न्यायसाम्यात् तत्सजातीयब्राह्मणादिवर्णानां सपिण्डेष्वस्तु पुत्रग्रहणं मूर्द्धावसिक्तादीनां वर्णत्वाभावेन तत्प्राप्त्यर्थं क्षत्रियादिवचनमारब्धं अन्यथा तेषां व्यवस्था न स्यादिति भावः। मूर्द्धावसिक्तादीनां क्षत्रियादिसमानधर्मत्वेन क्षत्रियादिव्यपदेशमुपपादयति ब्राह्मणेनेति। ननु शङ्खवचनात् मूर्द्धावसिक्तादीनामपि क्षत्रियादिपदैरुपात्तत्वात् क्षत्रियादीनां मूर्द्धावसिक्तादीनाञ्च परस्परं पुत्रपरिग्रहोऽस्तु इत्यत आह सजाताविति। तिस्रो वर्णानुपूर्व्येणेति।—आद्यर्नेनेति शब्देन द्वे तथैका यथाक्रमं ब्राह्मणक्षत्रियविशां भार्य्याः स्वा शूद्रजन्मनः इत्युक्तप्रतीकपरिग्रहः। अस्यार्थः। वर्णक्रमेण ब्राह्मणस्य तिस्रो भार्य्या ब्राह्मणक्षत्रियवैश्याः, क्षत्रियस्य द्वे क्षत्रियवैश्ये, वैश्यस्यैका वैश्यैव, शूद्रस्य स्वा सजातीयैव तत्र सजातीया मुख्या तदभावेऽसजातीया अनुकल्पः तथाच वर्णक्रमेण दारानुकल्पवत् वर्णक्रमेण पुत्रप्रतिनिधिर्भवति न वर्णजातीनां परस्परं पुत्रप्रतिनिधिव्यवस्था साहचर्य्यन्यायादिति भावः। सजातिनियमानुवादेनेति।—तथाच क्षत्रियायां सजातौ वैश्यादिपूर्व्ववाक्येनैव

मानां तदभावबोधनार्थत्वात् तदेवाह सर्वेषामिति । वर्णपदोपादानसामर्थ्यात् वर्णानामेव सजातिनियमः स्यात् नानुलोमजानामिति तन्निरासार्थं सर्वपदोपादानं, प्राप्तिश्च वर्णसमानधर्मत्वात् नच वर्णविशेषणं तत् चकारानुपपत्तेः ततश्च वर्णानामनुलोमजानाञ्च जातिष्वेवेति नियमो नान्यतो नान्येषु प्रतिलोमेष्वित्यर्थः ।

नन्विदं पूर्ववाक्यप्राप्तप्रत्यासत्त्यपवादकतयैव कुतो नेष्यते अदूरबान्धवमिति वशिष्ठवाक्यविरोधादिति चेन्न, तस्य ब्राह्मणवाक्यैकवाक्यतयोपसंहारादिति चेत् मैवं अपवादस्य लौकिकवैदिकप्रत्यासत्ति-

---

वर्णानामनुलोमजानाञ्च सजातिनियमे सिद्धे सर्वेषाञ्चैव वर्णानामिति कथनेन 'सिद्धे सत्यारम्भो नियमायेति' न्यायात् वर्णानामनुलोमजानाञ्च सजातिनियममनूद्य प्रतिलोमजानाञ्च सजातिनियमो नास्तीति विधानार्थं तदारम्भः सकारस्यानुवादो नैव दोषावह इति भावः । तदिति सर्वेषामिति पदं चकारानुपपत्तेः सर्वेषाञ्चैवेति चकारानुपपत्तेः ।

नन्विदमिति ।—ब्राह्मणानां सपिण्डेष्विति पूर्ववाक्ये सापिण्ड्यादिप्रत्यासत्त्यपवादकतयेत्यर्थः । तथाच विशेषवचनात् ब्राह्मणानां तथास्तु क्षत्रियाणां सजातौ वा इति सामान्यवचनेन जातिमात्रे पुत्रग्रहणं स्यात् न सापिण्ड्यादिप्रत्यासत्तिरादरणीया इति पूर्वपक्षयितुराशयः । अदूरबान्धवमिति ।—तथा च ब्राह्मणानां सपिण्डेष्वित्यादिविशेषवचनेनैकवाक्यत्वात् अदूरबान्धवमितिवचनं ब्राह्मणमात्रविषयमेव नान्यविषयं, सामान्यस्य तु विशेषेणैवोपसंहार इष्यते इति न्यायविरोधादित्यर्थः । अपवादेति ।—भ्रातृभ्रातृपुत्रादिषु पिण्डावयवसम्बन्धेन या प्रत्यासत्तिः सा लौकिकी, लोके प्रत्यक्षसिद्धत्वात् भार्यादिषु च यज्ञादिभि-

नियामकवृद्धव्यवहाररूपन्यायविरोधात् प्रयोजनाभावादतिप्रसङ्गात्। अनेनैव प्रत्यासत्तिसामान्यापवादे दौहित्रो भागिनेयश्चेति प्रत्यासत्तिविशेषापवादासङ्गतेश्च तस्मात् यथोक्तव्याख्यैव प्रयोजनवतीति।

प्रत्यासत्तिसामान्यात्प्राप्तयोर्दौहित्र इति तुशब्दमत्र चावधारणार्थतया शूद्रैरेवेति नियमात् त्रैवर्णिकव्यावृत्तिः, तत्र हेतुमाह ब्राह्मणादित्रय इति। कचिदपि शास्त्रे भागिनेयमत्र त्रैवर्णिकसुतत्वादर्शनात् शूद्रविषयत्वमेवेति समुदायार्थः, भागिनेय इत्यविवक्षितं

---

रस्त्रीनि मासिमांसानीत्यादि श्रुतेरवयवैकतादोषात् तत्र वैदिकप्रत्यासत्तिः उक्तश्रुतिरूपवेदसिद्धत्वात् अपवादश्चासौ लौकिकवैदिकप्रत्यासत्तिश्चेति तन्नियामकसन्निधायको यो वृद्धव्यवहाररूपो न्यायस्तद्विरोधादित्यर्थः। प्रयोजनाभावादिति।—सन्निहितसपिण्डादिपरित्यागेन सजातिमात्रग्रहणव्यवस्थायां दृष्टप्रयोजनाभावात् इत्यर्थः। अतीति।—ब्राह्मणानां सपिण्डेष्वित्यादिना प्रथमं सपिण्डग्रहणस्य लब्धितत्वात् तद्ग्रहणे सत्येव तच्चागमनमबाधितं स्यात्। तत्सत्त्वे सजातिमात्रग्रहणेऽलक्ष्ये स्त्रीकार्ये चलक्ष्ये तच्चागमनरूपातिप्रसङ्गादित्यर्थः। अनेनैवेति।—उक्तनियमो सजातौ वा इत्यनेनैवेत्यर्थः। प्रत्यासत्तिसामान्येनेति।—एतद्वचनेनैव सापिण्ड्यादिप्रत्यासत्तिसामान्यस्यापवादे दौहित्रो भागिनेयश्चेत्यनेन प्रत्यासत्तिविशेषस्यापवादासम्भवादित्यर्थः, तथाचापवादस्यापवादोऽसम्भव इति भावः। उपसंहरति तस्मादिति।

तुशब्दस्येति। शूद्रैस्त्वित्यत्रेति शेषः। ननु ब्राह्मणादित्रये नास्ति भागिनेय. सुतः कचिदित्यत्र मुनेर्भागिनेयपदप्रयोगवैयर्थ्यात् ततश्च विवादे [illegible] इत्याह [illegible]। [illegible] वर्षेति।—

हेतौ व्यर्थविशेषणतापत्तेः विवक्षायां भागासिद्धेश्च दौहित्रभागिनेयौ शूद्रविषयौ शास्त्रान्तरे त्रैवर्णिकविषयत्वाभावात् यथा सुरापानादाविति तेनोभयोस्त्रैवर्णिकविषयत्वासिद्धिः।

अथेदं वाक्यद्वयं शब्दविधयैव स्वस्वविषये प्रमाणं नानुमानविधया, तेन भागिनेयमात्रस्यैव त्रैवर्णिकविषयत्वाभावो न दौहित्र-

---

भागिनेयस्य त्रैवर्णिकसुतत्वादर्शनादिति हेतौ। भागिनेयविशेषणस्य व्यभिचाराबारकत्वेन वैयर्थ्यात् त्रैवर्णिकसुतत्वादर्शनादित्यनेनैव विवक्षितार्थलाभादिति भावः। भागासिद्धेश्चेति। दौहित्रभागिनेयौ शूद्रविषयौ शास्त्रान्तरे भागिनेयस्य त्रैवर्णिकसुतत्वादर्शनादित्यनुमाने पक्षांशे भागिनेये शास्त्रान्तरे भागिनेयस्य त्रैवर्णिकसुतत्वादर्शनादिति हेतोस्तित्त्वेऽपि दौहित्ररूपपक्षांशे तस्यावृत्तित्वात् भागासिद्धिरिति, यथा अभिधेयं प्रमेयं धर्मत्वादित्यत्र धर्मशब्दस्य पुण्यार्थकत्वकल्पनया भागासिद्ध्यभिधानं, तथाच न्यायविदः पक्षतावच्छेदकसामानाधिकरण्येन हेत्वभावो भागासिद्धिरिति। सुरापानादाविति।— यथा सुरापाननिषेधस्तु जात्याश्रय इति स्मृत इति स्मरणात् सुरापानं शूद्रविषयं त्रैवर्णिकविषयत्वाभावादिति तथेत्यर्थः।

शूद्रस्यैव दौहित्रभागिनेयौ पुत्रीकार्य्यौ इति नियमदार्ढ्याय पूर्वपक्षसिद्धान्ताभ्यां विचारयति अथेति। इदमिति।—'दौहित्रो भागिनेयश्चेति, 'ब्राह्मणादित्रयेनास्ति' इति वाक्यद्वयमित्यर्थः। शब्देति। शब्दरूपेण स्व स्व विषये दौहित्रो भागिनेयश्चेति ब्राह्मणादित्रये नास्तीति शब्दप्रमाणमतेये शूद्रकर्तृक दौहित्रभागिनेयपुत्रीकरणरूपे ब्राह्मणादीनां भागिनेयदौहित्रपुत्रत्वनिषेधरूपे च। नानुमानविधया।— दौहित्रभागिनेयौ शूद्रविषयौ शास्त्रान्तरे त्रैवर्णिकसुतत्वादर्शनादित्यनुमानरूपेण तथाच शूद्राणां दौहित्रभागिनेययोः पुत्रीकरणविधिः

मेवेति वाच्यं तदपि न, वाक्यभेदापत्तेः, दौहित्रस्य त्रैवर्णिकेषु विकल्पापत्तेश्च । स्वद्रुरबान्धवत्वेन प्राप्तत्वात् शूद्राणामेवेति नियमेन निषिद्धत्वात् ।

यद्वा शूद्राणामेवेति नियमेन दौहित्रस्य त्रैवर्णिकेषु निषेधः सिध्यति । त्रैवर्णिकानां भागिनेय एव न भवतीति नियमेन दौहित्रस्य प्राप्तिश्च विद्धतीति [विकल्पः । किञ्च शब्दविधया प्रामाण्ये पूर्ववाक्ये किं नियमः परिसङ्ख्या वा स्यात् । कथं नियमः कथञ्च परिसङ्ख्या । दौहित्रभागिनेयावेव शूद्राणामिति नियमः पक्षे

---

ब्राह्मणादीनां भागिनेयमात्रस्य पुत्रीकरणनिषेधः, दौहित्रो भागिनेयश्चेत्यत्र दौहित्रभागिनेयशब्दश्रवणात् ब्राह्मणादिविषये नास्तीत्यभागिनेयशब्दश्रवणाच्चेति भाव', तथाच 'वाक्यद्वयं नत्वेकवाक्यमिति फलितं । दूषयति तदपि नेति । वाक्यभेदापत्तेः ।—नचैतदिष्यते 'सम्भवत्येकवाक्यत्वे वाक्यभेदो न चेष्यते, इति न्यायविरोधात् । मुख्ये दौहित्रपदश्रवणात् वाक्यद्वयमस्तु का क्षतिरित्याह दौहित्रस्येति । विकल्पं दर्शयति स्वद्रुरबान्धवेत्यादिना शूद्राणामेवेति नियमेन त्रैवर्णिकेषु दौहित्रस्य निषेधात् वैदिकप्रमाणत्वेनोभयोस्तुल्यबलत्वात् तुल्यबलविरोधे विकल्प इति न्यायावकाशात् ।

ननु दौहित्रभागिनेयौ शूद्राणामेवेति नियमेन ब्राह्मणादीनामुभयोर्विधिप्राप्तौ भागिनेयमात्रस्य निषेधार्थं ब्राह्मणादिविषये नास्तीत्यस्य वाक्यस्य सार्थकत्वे न विकल्पावसर इत्यत आह यद्वेति । 'पूर्ववाक्ये' दौहित्रो भागिनेयश्चेति पूर्ववाक्ये इत्यर्थः । विधिपरिसंख्ययोः मध्ये ह दौहित्रभागिनेयावेवेति । नियम इति ।—पक्षे प्राप्तस्य प्राप्तप्रापणं नियम इति लक्षणात् । परिसंख्यामाह यद्य

दौहित्रादेः पक्षे च भ्रातृव्यादेः प्राप्तत्वात्। शूद्राणामेव दौहित्रभागिनेयाविति च परिसंख्या दौहित्रादेश्चतुर्ष्वपि वर्णेषु युगपत्प्राप्तत्वात्। तथाच भ्रातृव्यादिविधायकसामान्यशास्त्रस्य बाध, सर्व्वेषामेव वर्णानां जातिष्वेव न चान्यत इत्यत्र जातिपदस्य दौहित्रादिपरतया सङ्कोच, दौहित्रभागिनेययोरभावे पुत्रीकरणाभावप्रसङ्गश्चेति। परिसङ्ख्यापक्षे तु शूद्राणामेवेत्यनेनैव त्रैवर्णिकेषु तन्निषेधसिद्धौ ब्राह्मणादिविषये नास्ति इत्यादि पुनस्तन्निषेधकवाक्यवैयर्थ्यापत्तिरिति। तस्मादनुमानविधैव वाक्यद्वयव्याख्या साधीयसीति। किञ्च न्यायमूलिकाया अनुमानविधायाः श्रुतिमूलिकायाः

---

इति।—पक्षे रागपक्षे शूद्राणामेव दौहित्रभागिनेयाविति। तथाच एकस्य दौहित्रविषयकपुत्रीकरणस्य शूद्रेषु त्रैवर्णिकेषु च प्राप्तस्य त्रैवर्णिकेभ्यो निवृत्त्यर्थं शूद्रेषु विधीयते इति तात्पर्य्यम् एकस्यानेकत्र प्राप्तस्य अन्यतो निवृत्त्यर्थं एकत्र पुनर्व्वचनं परिसंख्येति तल्लक्षणात्। कमित्य दूषयति तथाच इति बाध इति—नियमस्य स्वायोगव्यवच्छेदफलकत्वमिव सदारनिरत सदेतिवत् अन्ययोगव्यवच्छेदफलकत्वमस्तीति तात्पर्य्यम्। जातिपदस्येति।—शूद्रविषय इति शेषः। ननु दौहित्रभागिनेयवचनेन सर्व्वेषामपि वर्णानामिति सामान्यबाधस्यावश्यम्भावे कथ सामान्यविशेषन्यायात् बाध स्यात् दौहित्रभागिनेययोरिति। पुत्रीकरणाभावप्रसङ्गश्चेति।—इत्यादयो समाचारविरोधादिति भावः। परिसंख्यापक्षे दोषमाह शूद्राणामेवेतीति।—तन्निषेधसिद्धाविति विधानेनैवान्यत्र प्रतिषेधसिद्धेरिति. न्यायात् उपसंहरति तस्मादिति। दृष्टान्तरं प्रदर्शयति किञ्चेति। न्यायमूलिकाया इति।—स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारत इत्यादि वचनादनुमा

शब्दविधाया गुरुत्वात् श्रुतिकल्पने श्रुतिद्वयकल्पनाच्च न्यायमूलकत्वे च नास्तीतिवर्त्तमानोपदेशो लिङ्गम्

यदा तु दौहित्रो भागिनेयो वा शूद्राणां विहितः सुत इति पाठस्तदापि शूद्राणामेव शूद्राणामपीति वेत्यन्वयसंशयव्युदासाय नियमपरतामेव स्पष्टीकर्त्तुं ब्राह्मणादिषय इत्यस्य प्रवृत्तेरेकवाक्यतैव नियमपरता चेयं। दौहित्रभागिनेयकर्मकपुत्रीकरणभावनायामनियमेन चतुर्णामपि वर्णानां कर्त्तृत्वेन प्राप्तौ शूद्रनियमेन शूद्राणामेवेत्यन्वयः सिध्यति, तथा च भागिनेयपदं दौहित्रस्याप्युप-

---

नामित्वया शाब्दबोधस्य गौरवात्। न्यायमूलकतयैकवाक्यत्वे प्रमाणं दर्शयति न्यायमूलकत्वे चेति, तथाच भिन्नवाक्यत्वे दौहित्रभागिनेयस्य शूद्रैस्तु क्रियते सुत इतिवत् ब्राह्मणादिषये नास्तीत्यत्रापि क्रियते कर्त्तव्योवेत्यादिविध्यर्थकक्रियापदं मुनीनामुचितं स्यात्, नास्तीति विध्यबाधकवर्त्तमानार्थकप्रयोगस्यानौचित्यादिति भावः। वर्त्तमानोपदेश इति।—वर्त्तमानकथनमित्यर्थः। 'लिङ्गं' हेतुः।

अन्वयसंशयव्युदासेति—तथाच दौहित्रोभागिनेयो वेत्यत्र वाशब्दस्यावधारणार्थत्वसमुच्चयार्थत्वसम्भवात् तदर्थलाभः, "वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये" इतिकोषात्। एकवाक्यतैवेति, नियमपरतैवेति।—यदा तु दौहित्रो भागिनेयो वा इति पाठस्तदापि तत्पाठेऽपि नियमपरता इत्यर्थः। इयं दौहित्रभागिनेयौ शूद्राणामेवेत्येवरूपा एतदेवाभिप्रेत्य स्वयमेव व्याचष्टे दौहित्रेति। अनियमेनेति।—ब्राह्मणानां सपिण्डेषु कर्त्तव्य पुत्रसंग्रह इत्यादि सामान्यवचनात्। शूद्रनियमेनेति।—दौहित्रभागिनेयस्येत्यनेनेति शेषः। शूद्राणामेवेत्यन्वय इति।—अन्यथा ब्राह्मणानां सपिण्डेषु इति सामा-

लक्षणमेव, अन्यथा दौहित्रभागिनेययोः शूद्रविषयत्वनियमासिद्धेः। सिद्धौ वा दौहित्रस्य त्रैवर्णिकविषये विकल्पापत्तिरित्युक्तमेव। यद्येवं तर्हि भागिनेयस्य त्रैवर्णिकविषयत्वाभाव एव दौहित्रभागिनेययोः शूद्रविषयत्वेन साध्यतामिति चेन्न। शूद्रविषयत्वादित्यनेनैव सिद्धौ दौहित्रभागिनेयपदोपादानवैयर्थ्यात्। अविवक्षायामुभयाविवक्षातो भागिनेयमात्राविवक्षायाः लघुत्वात्। तस्मात् यथोक्तमेव साधीय इति।

---

न्यवधानात् दौहित्रभागिनेयौ शूद्राणामपि प्राप्तौ दौहित्रो भागिनेयश्चेति वचनस्य नियमरूपविधायकत्वाभावेनानुवादकत्वेन च वैयर्थ्यं स्यात् इति भावः। अन्यथेति।—भिन्नवाक्यत्वेनोपलक्षणत्वाभावे दौहित्रभागिनेयौ शूद्राणामेवेति नियमासिद्धेरित्यर्थः। ननु भिन्नवाक्यत्वेऽपि दौहित्रभागिनेयावेव शूद्राणामिति नियमः स्यात् तथा च भागिनेयस्यैव ब्राह्मणादीनां निषेधनियमः कथं नियमासिद्धिरित्याह सिद्धौ वेति।—नियमसद्भावेत्यर्थः। दक्षमपि दूषणं स्मारयति त्रैवर्णिकेति। उक्तमेवेति।—यदा शूद्राणामेवेत्यादिना प्रागस्य सिध्यतीत्युक्तेन ग्रन्थसन्दर्भेणोक्तमित्यर्थः। वैपरीत्येनैकवाक्यत्वं वचनस्यापत्तिमुखेन प्रदर्शयति यद्येवमिति। भागिनेयस्य त्रैवर्णिकपुत्रत्वाभाववान् दौहित्रभागिनेययोः शूद्रविषयत्वादित्येवानुमानमस्तु किं वैपरीत्येनेति तात्पर्यं। दूषयति नेति।—ननु यथा भवन्मते दौहित्रभागिनेयौ शूद्रविषयौ क्वचिदपि शास्त्रे भागिनेयस्य त्रैवर्णिकपुत्रत्वादर्शनादित्यनुमाने भागिनेयपदस्य वैयर्थ्यं नाविवक्षा तथा दत्तकमतेऽपि भागिनेयस्यैव त्रैवर्णिकपुत्रत्वाभाववान् दौहित्रभागिनेययोः शूद्रविषयत्वादित्यनुमाने दौहित्रभागिनेययोरविवक्षास्तु इत्यत

तदेतत् स्पष्टमाचष्ट शाकलः। सपिण्डापत्यकञ्चैव सगोत्रजमथापि वा। अपुत्त्रकोदिशो यस्मात् पुत्त्रत्वे परिकल्पयेत्। सजातगोत्रजाभावे पालयेदन्यगोत्रजं। दौहित्रं भागिनेयञ्च मातृष्वसृसुतन्त्विति। एतेन भागिनेयपदं दौहित्रमातृष्वस्रेययोरुपलक्षणमिति स्पष्टमेव सिद्धम्। युक्तञ्चैतत् विरुद्धसम्बन्धस्य त्रिष्वपि समानत्वादित्यलं बहुना।

नान्यजातीयः पुत्त्रीकार्य्य इत्युक्तं तदतिक्रमे कथमित्यत आह शौनकः। यदि स्यादन्यजातीयो गृहीतोऽपि सुतः क्वचित्। अंशभाजं न तं कुर्य्याच्छौनकस्य मतं हि तदिति। अन्या ग्रहीत्रपेक्षया उत्कृष्टा अपकृष्टा वा जातिर्यस्यासौ गृहीतो विधिनापीत्यर्थः। अंशो धनस्य। अंशपदसामर्थ्यात् कृत्स्नधनव्युदासोऽर्थसिद्ध एव, ग्रास-

---

आह अविवक्षायामिति। दौहित्रभागिनेयेत्युभयपदाविवक्षापेक्षया मद्गुणाख्याने भागिनेयपदमात्राविवक्षायां लाघवादित्यर्थः। तथाचात्र वचने द्विजपदात् दौहित्रभागिनेयपदाच्च दौहित्रभागिनेययोर्त्रैवर्णिकसुतत्वाभावः स्पष्टमेव सिध्यति, तदा च शूद्राणामेव दौहित्रभागिनेयाविति नियमशरीरं सुलभमेव न काप्यनुपपत्तिरितिभावः।

भागिनेयपदमिति। शूद्रस्यादिश्रये नास्ति इतिवत्तव्यं भागिनेयपदं। अत्र दौहित्रादीनां पुत्रत्वमपि प्रमाणयति विरुद्धसम्बन्धस्येति। विरुद्धसम्बन्धन्तु कथमेव वदति विरुद्धसम्बन्धो यथा-परिशिष्ट इत्यादिना। नान्यजातीय इति।—सर्वेषामेव वर्णानां जातिष्वेव न चान्यत इत्यपेक्षितेति शेषः। कथमिति का व्यवस्थेत्यर्थः। कृत्स्नधनव्युदास इति।—तथाचोत्कृष्टापकृष्टजातीयदत्तकस्याभावेऽपि

वर्णास्तु ग्रासाच्छादनभाजना इति कात्यायनस्मरणात्। पिण्ड-दोंऽशहरश्चैषामित्युपक्रम्य सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधि-रिति योगीश्वरस्मरणाच्च।

इदानीं कीदृशः पुत्त्रीकार्य्य इत्यत आह शौनकः। नैकपुत्त्रेण कर्त्तव्यं पुत्त्रदानं कदाचन। बहुपुत्त्रेण कर्त्तव्यं पुत्त्रदानं प्रयत्नत इति। एक एव पुत्त्रो यस्येति एकपुत्त्रः, तेन तत्पुत्त्रदानं न कार्य्यम्, न त्वेवैकं पुत्त्रं दद्यात् प्रतिगृह्णीयाद्वेति वशिष्ठस्मरणात्। अत्र स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादानस्य दानपदार्थत्वात् पर-स्वत्वापादानस्य च परप्रतिग्रहं विनानुपपत्तेस्तमप्याक्षिपति, तेन प्रति-ग्रहनिषेधोऽपि अनेनैव सिध्यति। अतएव वशिष्ठः। नत्वेवैकं पुत्त्रं दद्यात् प्रतिगृह्णीयाद्वेति। तत्र हेतुमाह स हि सन्तानाय पूर्व्वेषा-मिति। सन्तानार्थत्वाभिधानेनैकस्य दाने सन्तानविच्छित्तिप्रत्यवायो बोधितः। स च दातृप्रतिग्रहीत्रोरुभयोरपि उभयशेषत्वात्। यत्त

ग्रासाच्छादनं देयमेव प्रतिलोमप्रसूतौ यत्तस्याः पुत्त्रो न रिक्थभाक् ग्रासाच्छादनमात्रन्तु देयं यद्बन्धुभिर्मतमिति असवर्णास्तु ग्रासाच्छादन-भाजना इति कात्यायनवचनेन ग्रासाच्छादनभागित्वस्य प्रतिपादनात् तथा चांशहरत्वं पिण्डादिदातृत्वञ्च पुत्त्रत्वप्रयोजकं न परिग्रहमात्रमिति-भावः। अत्र विजातीयस्य शास्त्रीयपुत्त्रत्वाभावेऽपि प्रतिलोमप्रसूतौ यत्तस्याः पुत्त्रो न रिक्थभागित्यत्र असवर्णास्तु ग्रासाच्छादनभाजना इत्यत्र च पुत्त्रपदप्रयोगो गौणः जन्यत्वसम्बन्धसाम्यादिति बोध्यं।

केन कीदृगित्यादिना प्रतिज्ञातमपि अवधानादिस्मरणाशङ्कायां तत् स्मारयति इदानीमिति। अत्र दाननिषेधेन प्रतिग्रहनिषेधमप्युपपा-दयति, स्वस्वत्वेति। 'आक्षिपति' विषयीकरोति। अनेनैवेति।—नैक-

स्मृत्यन्तरम् । सुतस्यापि च दाराणां वशित्वमनुशासने । विक्रये चैव दाने च वशित्वं न सुते पितुरिति । यत्तु योगीश्वरस्मरणम् देयं दारसुतादृते इति तदेकपुत्त्रविषयम् । 'कदाचन' आपदि । तथाच नारदः । निक्षेपः पुत्त्रदारञ्च सर्वस्वञ्चान्वये सति । आपत्स्वपि हि कष्टासु वर्त्तमानेन देहिना । अदेयान्याहुराचार्य्या यच्चान्यत्साधारणं धनमिति । इदमप्येकपुत्त्रविषयमेव वशिष्ठशौनकैकवाक्यत्वात् । तर्हि केन पुत्त्रो देय इत्यत आह बहुपुत्त्रेणेति । बहवः पुत्त्रा यस्येति 'बहुपुत्त्रः' । नैकपुत्त्रेणेति निषेधात् द्विपुत्त्रस्यैव दानप्राप्तौ यद्बहुपुत्त्रेणेत्युच्यते तद्द्विपुत्त्रस्यापि तत्प्रतिषेधाय । एकपुत्त्रो ह्यपुत्त्रो मे मतः कौरवनन्दन । एकं चक्षुर्यथाचक्षुर्नाशे तस्यान्ध एव हीत्यादि भीष्मं प्रति शान्तनूक्तेः । बहुपुत्त्रेणेति पुंस्त्वश्रवणात् स्त्रियाः पुत्त्रदानप्रतिषेधः । न स्त्री पुत्त्रं दद्यादिति नैरपेक्ष्यश्रवणाच्चेति भावः । भर्त्रनुज्ञाने तस्या अप्यधिकारः । तथाच वशिष्ठः-अन्यत्रानुज्ञानाद्भर्त्तुरिति । यत्तु दद्यान्माता पिता वेति यच्च माता पिता वा दद्यातामिति मातुः पितृसमकक्षतयाभिधानं तदपि भर्त्रनुज्ञानविषयमेव ।

---

पुत्त्रेणेत्यादिवचनेनेत्यर्थः । उभयशेषत्वादिति ।—नत्वेवैकं पुत्त्रं दद्यात् प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्व्वेषामित्युभयेषु वचनशेषत्वादित्यर्थः । सुतस्यापि चेति ।—सुतस्य दाराणाञ्च पितुरनुशासने दृष्टादृष्टार्थेशिक्षायां अधीनत्वं विक्रये दाने च सुते न वशित्वं । सुते इति षष्ठ्यर्थे सप्तमी सुते इति दाराणामप्युपलक्षणं । पितुरिति कर्त्तरि षष्ठी । यद्यन् साधारणं धनमिति । अत्र यच्चान्यच्च प्रतिश्रुतमिति क्वचित् पाठः ।

नचैवं विधवाया आपद्यपि पुत्रदानं न स्यात् भर्त्तनुज्ञाना-सद्भावात् परिग्रहवदिति वाच्यम्। मानवीयलिङ्गदर्शनेन तथाकल्पनात् नैरपेक्ष्यैकत्वश्रवणाच्च। स्त्रीनिरपेक्षस्यैकस्यापि भर्त्तुर्दानाधिकारः। दद्यात् माता पिता यं वा माता पिता वा दद्यातामिति मातृनिरपेक्षैकपितृनिर्द्देशात् बीजस्य प्राधान्यात् अयोनिजा अपि पुत्रा दृश्यन्त इति बौधायनीयहेतुदर्शनाच्च। भारतेऽपि। माता भस्त्रा पितुः पुत्रो येन जातः स एव हीति। श्रुतिरपि-आत्मा वै जायते पुत्र इति। मानवे दद्यातामित्युभयकर्त्तृकताश्रवणाच्चोभयाधिकारो मुख्यः। अतएव वशिष्ठः शुक्रशोणितसम्भवः पुत्रो

---

नैरपेक्ष्यश्रवणाच्चेति।—बहुपुत्रेणेत्यत्र पत्नीनैरपेक्ष्येण बहुपुत्रकर्त्तृकपुत्रदानश्रवणाच्चेत्यर्थः। एवं भर्तृसापेक्षाया अपि पुत्रदानं सिध्यतीति-भावः। तथाच सधवाया भर्त्तृसापेक्षं पुत्रदानं विधवायास्तु तन्नैरपेक्ष्येण पुत्रदानं सिध्यतीति दर्शितं।

मानवीयेति।—माता पिता वा दद्यातामिति मनुवचने भर्त्तृनिरपेक्षाया मातुः पुत्रदानप्रतिपादनादितिभावः। ननु बीजाद्योनिर्वलीयसीति वचनात् योनिप्राधान्यं शास्त्रीयं, तत् कथं स्त्रियमपेक्ष्य भर्त्तुः प्राधान्यमुक्तमित्यत आह अयोनिजा इति।—अगस्त्यमाण्डव्यादीनां पौराणिकलिङ्गदर्शनादितिभावः। मातरमपेक्ष्य पितुः प्राधान्यं दर्शयति माता भस्त्रेति। भस्त्रा लौहकाराणां अग्न्युद्दीपनयन्त्रविशेषः जाता इति प्रसिद्धा। येन स एव पिता स्व जात न पुत्रो योन्यन्तरं आत्मा वै जायते पुत्र इत्यादिश्रुत्येकमूलत्वात्। उभयाधिकारे प्रमाणान्तरं दर्शयति अतएव वशिष्ठ इति।—पुत्र इत्येव पाठ नतु पुरुष इति सर्वत्र स्मृतिषु तथा पाठदर्शनात् सामान्यप्रयोगमपेक्ष्य

मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवत इति। बौधायनोऽपि। मातापित्रोरेव संसर्गसाम्यादिति। अतएव माता पिता वा दद्यातामिति मनुना मातुर्भर्त्त्रनुज्ञानसापेक्षत्वात् जघन्यत्वं स्वनुज्ञानानपेक्षत्वात् पितुर्मध्यमत्वं जनकतासाम्यात् उभयोर्मुख्यत्वमभिप्रेत्य पूर्वपूर्वास्वरसादुत्तरोत्तरमभिहितम्। नचेदमेकमेव वाक्यं द्विवचनान्तैकक्रियान्वयादिति वाच्यम्, मध्ये विकल्पासङ्गतेः, तस्मात् कल्पत्रयमेव। अतएव योगीश्वरः। दद्यान्माता पिता यं वेति प्रत्येकमेकवचनान्तमेव क्रियापदमुदाजहार, तत्रापि निमित्तमाह प्रयत्नत इति। प्रकृष्टो यत्नो यस्मिन् कालेऽसौ 'प्रयत्नः' आपत्कालस्तेन चापत्काल एव पुत्त्रदानं नान्यथेत्यर्थः। यथाह कात्यायनः। आपत्काले तु कर्त्तव्यं दानं विक्रय एव वा। अन्यथा न प्रवर्त्तेत् इति शास्त्रविनिश्चय इति। प्रक्रमात् पुत्त्रदाराणाम्। मनुरपि। माता पिता वा

---

विशेषशब्दप्रयोगे प्रयोक्तुः कौशल्यात् प्रयोगस्य सौगम्याच्च। संसर्गसाम्यादिति।—जनकत्वरूपसम्बन्धसाम्यादित्यर्थः। पूर्वपूर्वास्वरसादिति।—माता पिता वेत्यादिमनुवचने प्रथमतो मातृपदप्रयोगः कृतः, तत्र पितरमपेक्ष्य मातुरधमत्वमस्वरसं विचिन्त्य पितृपदप्रयोगः कृतः पिता वेति। अत्रापि शुक्रशोणितेत्यादिवचनेनोभयोस्तुल्यकर्त्तृतामस्वरसवीजं विचिन्त्य दद्यातामिति द्विवचनान्तक्रियोदाहरणेन पित्रोः प्रयोगः कृत एवेति भावः। विकल्पेति।—माता पिता वेति वाशब्देनेति शेषः। अतएवेति।—यत एव कल्पत्रयं अतएवेत्यर्थः। तत्रापीति पुत्त्रप्रदानेऽपीत्यर्थः। प्रयत्नत इति।—नैकपुत्त्रेण कर्त्तव्यं पुत्त्रदानं प्रयत्नत इत्येवेति शेषः। अत्र कात्यायनवचनं प्रमाणयति यथाह कात्यायन इति।

दद्यातां यमद्भिः पुत्त्रमापदीति। 'आपदि' दुर्भिक्षादौ। नापदि दाने दातुर्दोषः अन्यथा न प्रवर्त्तेतेति निषेधात् यद्वा प्रयत्नत इति प्रतिग्रहीतुः प्रयत्नादापद्यपुत्त्रत्व इति। अपुत्त्रेणैव कर्त्तव्यः पुत्त्रप्रतिनिधिः सदेत्यभिधारणात् व्याख्यातश्चैवमेवापरार्कचन्द्रिकाभ्याम् आपदि गृहीतुरपुत्त्रत्व इति।

विशेषान्तरमपि कालिकापुराणे। दत्ताद्या अपि तनया निजगोत्रेण संस्कृताः। आयान्ति पुत्त्रतां सम्यगन्यबीजसमुद्भवाः। पितुर्गोत्रेण यः पुत्त्रः संस्कृतः पृथिवीपते। आचूडान्तं न पुत्त्रः स पुत्त्रतां याति चान्यत इति। चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः। दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते। ऊर्द्ध्वन्तु पञ्चमाद्वर्षात् न दत्ताद्याः सुता नृप। गृहीत्वा पञ्चवर्षीयं पुत्त्रेष्टिं प्रथमञ्चरेत्। पौनर्भवन्तु तनयं जातमात्रं समानयेत्। कृत्वा पौनर्भवष्टोमं जातमात्रस्य तस्य वै। सर्वांस्तु कुर्य्यात् संस्कारान् जातकर्मादिकान् नरः। कृते पौनर्भवष्टोमे ततः पौनर्भवः सुत इति।

दत्तेति अन्यबीजसमुद्भवा अपि दत्ताद्यास्तनया निजगोत्रेण प्रतिग्रहीत्रा स्वगोत्रेण सम्यक् स्वसूत्रोक्तविधिना जातकर्मादिभिः

---

पुत्त्रदानाद्यामिति दानादीत्यर्थः। दातुर्दोष इति—तथाच दातुः प्रत्यवायमात्रं न प्रतिग्रहीतुः। प्रत्यवायश्रवणात् दाने निषिद्धमिति भावः। आपदि अपुत्त्रत्व इति।—तथाचापुत्त्रत्वस्यापद्यापदि प्रतिग्रहीतुः प्रत्यवायसम्भवात्।

विशेषान्तरमपीति। अत्र विवरणं स्वयं ग्रन्थकृत दत्तेत्यादिभिः। स्वसूत्रोक्तेति।—स्वसूत्रोक्तविधिना स्वगृह्योक्तविधिना कात्यायनीय-

संस्कारास्तेन तदैव प्रतिग्रहीतुः पुत्रतां प्राप्नुवन्ति नान्यथेत्यर्थः। तदाह वशिष्ठः। अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः। स्वगोत्रेण स्वशाखोक्तविधिना सस्वशाखभागिति दत्ताद्या इत्यादिपदेन कृत्रिमादीनां ग्रहणम्। औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च। गूढोत्पन्नोऽपविद्धश्च भागार्हास्तनया इमे। कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा। स्वयन्दत्तश्च दासश्च षडिमे पुत्रपांसनाः। अभावे पूर्वपूर्वेषां परान् समभिषेचयेत्। पौनर्भवं स्वयन्दत्तं दासं राज्येन योजयेदिति पूर्वोपक्रमात् योऽयं पौनर्भवादीनां राज्यनियोजनाभावः स औरसव्यतिरिक्ताभाव एव, अभावे पूर्वपूर्वेषामित्यस्यैवानेनापवादात् सत्यौरसे तु राज्याभावश्च न क्षेत्रजादींस्तनयान् राजा राज्येऽभिषेचयेत्। पितॄणां साधयेन्नित्यमौरसे तनये सतीत्यनेन प्रागेवाभिधानात्। सत्यौरसे क्षेत्रजादीन् राज्ये नैवाभिषेचयेत् पितॄणां नित्य श्राद्धादि च नैव साधयेत् न कारयेदित्यर्थः। गोत्रेणेति यदपि जातकर्मादीनां साधाद्गोत्रस्य कर-

---

वेदोक्तविधिनेति यावत्। अन्यशाखोद्भव इति।—अन्या प्रतिग्रहीत्रपेक्षया भिन्ना शाखा कर्मकाण्डीयवेदो यस्य तदुद्भव भिन्नगोत्र इत्यर्थः। 'उपनायित' संस्कृत इत्यर्थः धातूनामनेकार्थत्वात् उपनीत इति वार्थः। पुत्रपांसना इति।—पांसनशब्दो दन्त्यसमध्योऽधमवाची। पूर्वोपक्रमादिति। तथाच औरसः क्षेत्रजश्चैवेत्यादिवचनानन्तरं अन्यशाखोद्भवेत्त्वा इति वचनस्य संहितायां वशिष्ठेन लिखितत्वात् तदुपक्रमादित्यर्थः। प्रागेवाभिधानादिति।—संहितायामिति शेषः। इत्यर्थ इति।—इदं निर्गलितार्थः। औरससत्त्वे क्षेत्रजादीनां राज्येनाभि-

यता न श्रूयते तथापि तदङ्गभूते वृद्धिश्राद्धे तत्सम्बन्धावश्यम्भावात् प्रधानेऽपि तत्सम्बन्ध इति। चूड़ादिषु साक्षादेव तत्सम्बन्धः। शिखा अपि च कर्त्तव्याः कुमारस्यार्षसङ्ख्ययेति स्मरणात्। संस्कारैः पुत्त्रत्वमित्युक्तम् तानेवान्वयव्यतिरेकाभ्यामाह पितुर्गोत्रेणेति। यः पुत्त्र आचूड़ान्तं चूड़ान्तैः संस्कारैः पितुर्जनकस्य गोत्रेण संस्कृतः सोऽन्यतोऽन्यस्य पुत्त्रतां न याति अयमत्राभिसन्धिः। कृतचूड़स्य परिग्रहीतृपुत्त्रताभावप्रतिपादनं असाधारणपुत्त्रतां विषयीकरोतीत्यवश्यं वाच्यम्। अन्यथा गृहीत्वा पञ्चवर्षीयमित्यनेन कृतचूड़स्यापि परिग्रहीतृपुत्त्रताप्रतिपादनविरोधात् गृहीत्वेत्यस्य च कृतचूड़विषयत्वावश्यम्भावः स्पष्टमिष्यते। ततश्च चूड़ान्तसंस्कारसंस्कृतस्य परिग्रहे द्व्यामुष्यायणता भवति गोत्रद्वयेन संस्कृतत्वात् तस्य च फलं गोत्रद्वयसम्बन्ध इत्यग्रे वक्ष्यते। अनेन जातकर्मादीनां चूड़ान्तानां संस्काराणां पुत्त्रताहेतुत्वमुक्तम्। आचूड़मिति वक्तव्ये यदन्तपदपाठं तदकृतार्षसमसङ्ख्यशिखस्य पुत्त्रीकरणाभ्यनुज्ञानार्थं

---

कारः, औरसाभावे क्षेत्रजाद्याः क्रीतान्ताः सर्व्व क्रमेण राज्याधिकारिणः, तेषामभावेऽपि पौनर्भवस्वयन्दत्तदासा न राज्याधिकारिण इति। आर्षसंख्ययेति। प्रवरसंख्ययेत्यर्थः। तथाच येषां यावन्तः प्रवरास्तेषां तावत्यः शिखाः कर्त्तव्या इति भावः। संस्कारैः पुत्त्रत्वमित्युक्तमिति। दत्ताद्या अपि तत्तत् निजगोत्रेण संस्कृता इत्यनेन वचनेनेति ध्येयः। तानेवेति।—संस्कारानेव पुत्त्रत्वहेतुनित्यर्थः। अन्वयेति।—संस्कारस्य सत्त्वे पुत्त्रत्वस्य दर्शनं तदसत्त्वे तददर्शनमित्येवं रूपाभ्यामन्वयव्यतिरेकाभ्यामित्यर्थः। अकृतार्षसमेति।—तथाच जनकेन शिखाच्छेदात् पूर्व्वस्मिन् कर्म्मणि विषये कृतेऽपि प्रतिग्रहीत्रा प्रवर-

प्रधानानिष्पत्त्या पुत्रतार्हत्वात् चूडाद्या इति वक्ष्यमाणत्वाच्च।

अकृतजातकर्माद्यसम्भवे कथमित्यत आह चूडाद्या यदीति। यदि चूडाद्याः संस्कारा निजगोत्रेण प्रतिग्रहीतृगोत्रेण कृता वैशब्दोऽवधारणे तदैव दत्ताद्यास्तनयाः स्युरन्यथा ते दासा उच्यन्ते इति। चूडा आद्या येषां ते तथेति नतु चूडाया आद्या इति पूर्वेण पौनरुक्त्यापातात्। अनेन जातकर्माद्यन्नप्राशनान्तानां जनकगोत्रेणानुष्ठानेऽपि न विरोधः। तथाच अकृतजातकर्मादि-

---

संस्कारा शिखाच्छेदनमात्रे कृते तस्य पुत्रत्वमस्त्विति भावः। प्रधानानिष्पत्त्येति प्रधानस्य चूडाच्छेदनरूपसंस्कारस्यानिष्पत्त्या अनिर्व्वाहेणेत्यर्थः। चूडाद्या इतीति।—तथाच चूडाद्या यदि संस्कारा इत्यत्र केवलं शिखाशब्दवाच्यचूडाशब्दश्रवणात् तथार्थलाभ इति भावः।

अकृतजातेति।—दत्ताद्या अपि तनया निजगोत्रेण संस्कृता इत्यनेनाकृतजातकर्म्मणो यद्यसमभिहितं तदसम्भवे तादृशस्यापत्यत्वं किं कुर्य्यात्। चूडाद्या यदीतीति।—ननु चूडाया आद्या इति तत्पुरुषसमासाश्रयणं कथं न कृतं किमिति बहुव्रीहिराश्रीयते तत्रोत्तर-पदस्यार्थस्य प्राधान्येन तत्पुरुषाश्रयणमनुचितमित्यत आह पूर्व्वेणेति।—दत्ताद्या अपि तनया निजगोत्रेण संस्कृता इत्यनेनैवार्थः, तत्र हि प्रतिग्रहीतृ-गोत्रेण चूडाया पूर्व्वसंस्काराणां जातकर्म्माद्यन्नप्राशनान्तानां करणेन पुत्रत्वमुक्तं। अत्रापि तत्कथने पौनरुक्त्यापातादित्यर्थः। तथाचात्र तद्-गुणसंविज्ञानबहुव्रीहिणा चूडाप्रभृतिकसंस्कारा इति प्रतिपादितं। अनेनेति।—अनेन चूडाद्या यदि संस्कारा इत्यनेनेत्यर्थः। अकृत-जातकर्म्मादिरिति।—यदसमभिहितत्वात् कुमार ग्रहात् प्रदत्त कन्य

णता न श्रूयते तथापि तदङ्गभूते वृद्धिश्राद्धे तत्सम्बन्धावश्यम्भावात् प्रधानेऽपि तत्सम्बन्ध इति। चूड़ादिषु साक्षादेव तत्सम्बन्धः। शिखा अपि च कर्त्तव्याः कुमारस्यार्षसङ्ख्ययेति स्मरणात्। संस्कारैः पुत्रत्वमित्युक्तम् तानेवान्वयव्यतिरेकाभ्यामाह पितुर्गोत्रेणेति। यः पुत्र आचूड़ान्तं चूड़ान्तैः संस्कारैः पितुर्जनकस्य गोत्रेण संस्कृतः सोऽन्यतोऽन्यस्य पुत्रतां न याति अयमत्राभिसन्धिः। कृतचूड़स्य परिग्रहीतृपुत्रताभावप्रतिपादनं असाधारणपुत्रतां विषयीकरोतीत्यवश्यं वाच्यम्। अन्यथा गृहीत्वा पञ्चवर्षीयमित्यनेन कृतचूड़स्यापि परिग्रहीतृपुत्रताप्रतिपादनविरोधात् गृहीत्वेत्यस्य च कृतचूड़विषयत्वावश्यम्भावः स्पष्टमिष्यते। ततश्च चूड़ान्तसंस्कारसंस्कृतस्य परिग्रहे द्व्यामुष्यायणता भवति गोत्रद्वयेन संस्कृतत्वात् तस्य च फलं गोत्रद्वयसम्बन्ध इत्यग्रे वक्ष्यते। अनेन जातकर्मादीनां चूड़ान्तानां संस्काराणां पुत्रताहेतुत्वमुक्तम्। आचूड़मिति वक्तव्ये यदन्तग्रहणं तदकृतार्षसमसङ्ख्यशिखस्य पुत्रीकरणाभ्यनुज्ञानार्थं

---

कारः, औरसाभावे क्षेत्रजादयः कौन्तेयाः सर्व्व क्रमेण राज्याधिकारिणः, तेषामभावेऽपि पौनर्भवस्वयन्दत्तदासा न राज्याधिकारिण इति। आर्षसंख्ययेति। प्रवरसंख्ययेत्यर्थः। तथाच येषां यावन्तः प्रवरास्तेषां तावत्यः शिखाः कर्त्तव्या इति भावः। संस्कारैः पुत्रत्वमित्युक्तमिति। दत्ताद्या अपि तनया निजगोत्रेण संस्कृता इत्यनेन् वचनेनेति शेषः। तानेवेति।—संस्कारानेव पुत्रत्वहेतूनित्यर्थः। अन्वयेति।—संस्कारस्य सत्त्वे पुत्रत्वस्य दर्शनं तदसत्त्वे तददर्शनमित्येवं रूपाभ्यामन्वयव्यतिरेकाभ्यामित्यर्थः। अकृतार्षसमेति।—तथाच जनकेन शिखाच्छेदात् पूर्व्वस्मिन् कर्म्मणि विषये कृतेऽपि प्रतिग्रहीत्रा प्रवर-

प्रधानानिष्पत्त्या पुत्त्रतार्हत्वात् चूड़ाद्या इति वक्ष्यमाणत्वाच्च।

अकृतजातकर्माद्यसम्भवे कथमित्यत आह चूडाद्या यदीति। यदि चूड़ाद्याः संस्कारा निजगोत्रे प्रतिग्रहीतृगोत्रेण कृता वैशब्दोऽत्रधारणे तदैव दत्ताद्यास्तनयाः स्युरन्यथा ते दासा उच्यन्ते इति। चूड़ा आद्या येषां ते तथेति न तु चूडाया आद्या इति पूर्व्वेण पौनरुक्त्यापातात्। अनेन जातकर्माद्यन्नप्राशनान्तानां जनकगोत्रेणानुष्ठानेऽपि न विरोधः। तथाच अकृतजातकर्मादि-

---

संख्यया शिखाच्छेदनमात्रे कृते तस्य पुत्त्रत्वमक्षुण्णमिति भावः। प्रधानानिष्पत्त्येति प्रधानस्य चूड़ाच्छेदनरूपसंस्कारस्यानिष्पत्त्या अनिर्व्वाहेणेत्यर्थः। चूडाद्या इतीति।—तथाच चूडाद्या यदि संस्कारा इत्यत्र केवलं शिखाशब्दवाच्यचूडाशब्दश्रवणात् तथार्थलाभ इति भावः।

अकृतजातेति।—दत्ताद्या अपि तनया निजगोत्रेण संस्कृता इत्यनेनाकृतजातकर्म्मणः प्रश्नमभिहितं तदसम्भवे तादृशस्याप्राप्तौ कथं किं कुर्य्यात्। चूडाद्या यदीतीति।—ननु चूडाया आद्या इति तत्पुरुषसमासाश्रयणं प्रोज्झ्य किमिति बहुव्रीहिराश्रीयते तस्योत्तर-पदार्थान्वयिकत्वेन तत्पुरुषाज्जघन्यत्वादित्यत आह पूर्व्वेणेति।—दत्ताद्या अपि तनया निजगोत्रेण संस्कृता इत्यनेनेत्यर्थः, तत्र हि प्रतिग्रहीतृगोत्रेण चूड़ाद्याः पूर्व्वसंस्काराणां जातकर्म्माद्यन्नप्राशनान्तानां करणेन पुत्त्रत्वमुक्तं। अत्रापि तत्कथने पौनरुक्त्यापातादित्यर्थः। तथाचात्र तद्गुणसंविज्ञानबहुव्रीह्याश्रयणेन चूडाप्रभृतिकसंस्कारा इति प्रतिपादितं। अनेनेति।—अनेन चूडाद्या यदि संस्कारा इत्यनेनेत्यर्थः। अकृतजातकर्म्मादिरिति।—प्रथममभिहितत्वात् मुख्यः स्यात् प्रथम कल्प

यत्तु कात्यायनस्मरणम्। विक्रयश्चैव दानञ्च न नेयाः स्युरनिच्छवः। दाराः पुत्त्राश्चेत्यनिच्छूनां दानादिनिषेधः सोऽपि पञ्चवार्षिकस्यैव नाधिकस्येति व्याख्येयम्। यच्च सदृशन्तु प्रकुर्य्यात् यमिति वाक्ये गुणदोषविचक्षणमिति पाठमभिप्रेत्य विचक्षणं नतु बालमिति सर्व्वज्ञेन व्याख्यातम् तदपि पञ्चवार्षिकमेव। विचक्षणं चातुर्य्यविशेषेण नतु बालं, बाल्य आषोडशाद्वर्षादिति-लक्षणविशिष्टं न कुर्य्यादित्यर्थ इति व्याख्येयम्। तच्चसंस्कृताभावे कथमित्यत आह गृहीत्वेति। पञ्चवर्षीयं चूडान्तसंस्कारसंस्कृतमित्यर्थः। ननु कथं तस्य ग्रहणं दासताभिधानादित्यत आह पुत्त्रेष्टिमिति। अयमत्राभिसन्धिः अग्नये पुत्त्रवते पुरोडाशमष्टाकपालं निर्व्वपेदिन्द्राय पुत्त्रिणे पुरोडाशमेकादशकपालं प्रजाकामोऽग्निरेवास्मै प्रजां प्रजनयति वृद्धामिन्द्रः प्रयच्छतीति वाक्ये प्रजा-

---

ननु कात्यायनवचने अनिच्छव इति स्वरसेन पञ्चवर्षाभ्यन्तरवर्त्तिनः स्वारसिकेच्छाविरहमाशङ्क्य पञ्चवर्षाधिकस्य तदिच्छासम्भवात् तद्ग्रहणमस्तु इति कात्यायनवचनं मीमांसते यत्त्विति। सदृशं तु प्रकुर्य्यात् यं गुणदोषविचक्षणमित्यत्र वचने विचक्षणमिति विशेषणस्वारस्य पञ्चवर्षाभ्यन्तरवर्त्तिनो बालस्य वैचक्षण्यासम्भवात् तत्परं तदूर्द्धमेव तत्सम्भवात् पञ्चवर्षादूर्द्धमपि पुत्त्रग्रहणस्यौचित्यमिति निपादयति यच्चेति। अत्र सर्व्वेषामभिप्रायं विवृणोति विचक्षणमित्यादिनेति। दासताभिधानादिति।—चूडाद्या यदि संस्कारा-स्त्वादिनेति शेषः। चूडादिसंस्कारसंस्कृतमित्यर्थ इति। पञ्चवर्षाभ्यन्तरवर्त्तित्वे सति चूडादिसंस्कारसंस्कृतमित्यर्थ इति बोध्यं, अन्यथा ऊर्द्ध्वन्तु पञ्चमाद्वर्षात् इत्युपसंहारे वर्षश्रवणादित्यादिशेषाङ्गविरोध

फलकत्वमिष्टेः श्रूयते तत् यत्रानुत्पन्ना प्रजा तत्र तदुत्पत्तिरेव भाव्या, यत्र तूत्पन्ना परिदृश्यते तत्रोत्पत्तेरभावात् तस्याः प्रजात्वमेव भाव्यमिति कल्प्यते प्रकृतविध्यन्यथानुपपत्तेः। तत्र दासत्वापनोदनमृते न सम्भवतीति तदपनोदोऽप्यवश्यमभ्युपेयः, अन्यथा प्रजात्वमात्रसम्पादकत्वे पुत्रपरिग्रहमात्रे स्यात्। यदि च संस्कारैरेव तत्र पुत्रत्वोत्पत्तेर्न तदपेक्षेति। तर्हि प्रकृतेऽपि तुल्यं, प्रथमपदेनात्र तत्सूचनात्, सर्व्वांस्तु कुर्यात् संस्कारान् जातकर्म्मादिकान् नर इत्यन्तेऽभिधानाच्च। तस्मात् पुत्रेष्ट्या पूर्व्वसंस्कारप्रयुक्तदासत्वापनोदपूर्व्वकप्रजात्वसम्पादनात् संस्कृतोऽपि परिग्राह्य

---

स्यादिति। प्रकृतविध्यन्यथानुपपत्तेरिति।—कृतचूडस्योत्पन्नत्वेनोत्पत्तेरसम्भवात् प्रकृतविधेर्दत्तौरसौ पञ्चवर्षीयमित्यादिनोक्तपुत्रेष्टिविधेः सुतरामत्र प्रजाफलकत्वं विनानुपपत्तेः विधिवैयर्थ्यापत्तेरिति भावः। तस्येति।—प्रजात्वमित्यर्थः। दासत्वापनोदनमिति।—दासत्वापनोदनं विना प्रजात्वस्यासम्भवादित्यर्थः। अन्यथेति।—प्रजात्वमात्रसम्पादकत्वे इति, इष्टेरिति शेषः। पुत्रपरिग्रहमात्रे स्यादिति।—इष्टिः स्यादित्यर्थः। तथाच यत्राकृतजातकर्म्मादीनां पुत्राणां दासता नास्ति तत्र प्रजात्वसम्पादनस्यावश्यम्भावात् पुत्रेष्ट्यनुष्ठानं सेत्स्यतीति भावः। ननु यत्र दासता नास्ति तत्र जातकर्म्मादिसंस्कारैरेव पुत्रत्वं भाव्यं न तत्र पुत्रेष्ट्यपेक्षा संस्काराणामपि प्रजात्वनिमित्तत्वात् इत्यत आह यदि चेति। प्रकृतेऽपीति।—चूडान्तसंस्कारसंस्कृतपरिग्रहेऽपीत्यर्थः। तुल्यमिति।—यथा अकृतसंस्काराणां संस्कारोऽपेक्षणीयः तथा कृतसंस्कारस्यापीति समानमित्यर्थः। ननु अकृतसंस्कारस्यैव संस्कारोऽपेक्षणीयः कृतसंस्कारस्य संस्कारकरणे किं मानमित्याह प्रथमपदेनेति।

कृत इति। पौनर्भवस्तोमे कृते ततस्तैः संस्कारैः पौनर्भवः सुतो भवतीत्यर्थः।

प्रासङ्गिकान् पौनर्भवधर्मानाह। एकोद्दिष्टं पितुः कुर्य्यात्पुनः श्राद्धे पार्वणादिकम्। पौनर्भवः पुत्रः पितुः क्षयाहे एकोद्दिष्टमेव कुर्य्यात् न पार्वणादिकं। आदिशब्दात् पार्वणविकृतीनामपि निषेधः। प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ। कुर्य्यातामितरे कुर्युरेकोद्दिष्टं सुता दशेति जातूकर्णस्मरणात्। पितुर्गतस्य देवलमौरसस्य त्रिपौरुषम्। सर्वत्रानेकगोत्राणामेकोद्दिष्टं क्षयेऽहनीति पराशर-

---

इत्यन्तेन उत्पत्तिमात्रेण पौनर्भवः प्रतिग्राह्य, नत्वितरवत् पञ्चवर्षाभ्यन्तरवयस्कोऽपि प्रतिग्रहानन्तरं पौनर्भवस्तोमाख्ययागविशेषं कृत्वा जातकर्मादयो विधेया इति प्रतिपादितं। सर्वांस्तु कुर्य्यादित्यादि नर इत्यन्तेन प्रतिग्रहीतुर्गर्भसंस्कारकरणनिवृत्तिः, येषां यावन्तः संस्कारास्तेषां तावतां प्राप्तिः अर्थात् शूद्राणामुपनयनाद्यभावेऽपि चूडादिभिः पुत्रत्वं भाव्यमिति प्रतिपादितं। कृते पौनर्भवस्तोम इत्यादि सुत इत्यन्तेन पौनर्भवस्य पुत्रत्वेन पौनर्भवस्तोमसंस्कारयोः साहित्येन निमित्तत्वमुपसंहृतमिति प्रतिपादितं।

प्रासङ्गिकानिति। पौनर्भवप्रकरणस्य प्रकृतत्वेन तद्धर्मस्य प्रासङ्गिकत्वमतोऽप्रस्तुताभिधानं नाशङ्कनीयं। 'एकोद्दिष्टं' एकोद्दिष्टविधिकं, अतऊर्द्ध्वं संवत्सरे संवत्सरे प्रेतायान्नं दद्यात् यस्मिन्नहनि प्रेत स्यादित्याद्युक्तमित्यर्थः। पार्वणविकृतीनामपीति।—अमावास्याक्षये यस्य प्रेतपक्षेऽथवा पुनः। सपिण्डीकरणादूर्द्ध्वं तस्योक्तः पार्वणो विधिरित्याद्युक्तश्राद्धानामित्यर्थः। अत्र वचनान्तरं प्रमाणयति प्रत्यब्दमिति। सर्वत्रेति।—क्षयाहमघामहालयादिष्वित्यर्थः। अनेक-

स्मरणाच। पुत्रोऽद्वै मे स्वयंदत्तश्च दासश्चेत्युक्तम्, तत्र दासलक्षणमाह—क्रीता या रमिता मूल्यैः सा दासीति निगद्यते। तस्यां यो जायते पुत्रो दासपुत्रस्तु सः स्मृतः। या सवर्णापि मूल्यैः क्रीता सती रमितोपभुक्ता सा दासीत्युच्यते पूर्वैः। क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते। न सा दैवे न सा पैत्रे दासीं तां कवयो विदुरिति स्मरणात्। तस्यां जातो दासपुत्रः। दास्याः पुत्रो 'दासपुत्रः' छान्दसः पुम्वद्भावः। यद्वा दासश्चासौ पुत्रश्चेति यद्वा दासाभिधः पुत्र इति। तद्धर्मानाह—न राज्ञो राज्यभाक् स स्यात् विप्राणां श्राद्धकृन्न च। अधमः सर्वपुत्रेभ्यस्तं तस्मात् परिवर्जयेत्। स राज्ञो राज्यभाक् न विप्राणां श्राद्धकृच्च न स्यात्, यस्मात्-सर्वपुत्रेभ्योऽधम इत्यर्थः॥

कीदृश इति निरूपितं इदानीं कथमिति निरूप्यते। तत्र शौनकः। शौनकोऽहं प्रवक्ष्यामि पुत्रसंग्रहमुत्तमम्। अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च। 'संग्रहं' संग्रहणविधिं। उपोष्य संग्रहदिनात् पूर्वेद्युः।

---

गोत्रजा दत्तकादीनामित्यर्थः। अपरेद्युनि एकोद्दिष्टमेव अमावस्यादिषु पार्वणं भवत्येवेत्यर्थः। एतच्च सापिण्ड्ये, पार्वणेन विधानेन देयमनिमित्तं स्यादिति वचनात् इति बोध्यं। 'पुत्रोऽद्वैमे' द्वादशविधपुत्रगणनार्थमात्मिकार्थः। दासाभिधः पुत्र इतीति।—इदं तु न बोधकं। दास्यां अयं दासः स चासौ पुत्रश्चेति कुतश्चित् सौलभ्यात्। न राज्ञ इति।—राज्यविप्रश्राद्धाधिकारनिषेधेन सर्वथा विप्रान्यभावे राज्यातिरिक्तधने चाधिकारित्वमस्तीति प्रदर्शितं।

कृत इति। पौनर्भवष्टोमे कृते ततस्तैः संस्कारैः पौनर्भवः सुतो भवतीत्यर्थः।

प्रासङ्गिकान् पौनर्भवधर्मानाह। एकोद्दिष्टं पितुः कुर्य्यात् न श्राद्धं पार्वणादिकम्। पौनर्भवः पुत्त्रः पितुः क्षयाहे एकोद्दिष्टमेव कुर्य्यात् न पार्वणादिकं। आदिशब्दात् पार्वणविकृतीनामपि निषेधः। प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ। कुर्य्यातामितरे कुर्य्युरेकोद्दिष्टं सुता दशेति जातूकर्ण्यस्मरणात्। पितुर्गतस्य देवत्वमौरसस्य त्रिपौरुषम्। सर्वेषामेकगोत्राणामेकोद्दिष्टं क्षयेऽहनीति पराशर-

इत्यन्तेन उत्पत्तिमात्रेण पौनर्भवं प्रतिग्राह्य, नचिरं वत् पञ्चवर्षाभ्यन्तरवयस्कोऽपि प्रतिग्रहानन्तरं पौनर्भवष्टोमाख्ययागविशेषं कृत्वा जातकर्मादयो विधेया इति प्रतिपादितं। सर्वांस्तु कुर्य्यादित्यादिनरः इत्यन्तेन प्रतिग्रहीतुर्गर्भसंस्कारकरणनिवृत्तिः, येषां यावन्तः संस्कारास्तेषां तावन्तः प्राप्ति अर्थात् शूद्राणामुपनयनाद्यभावेऽपि चूडादिभिः पुत्त्रत्वं भाव्यमिति प्रतिपादितं। कृते पौनर्भवष्टोमे इत्यादि ततः इत्यन्तेन पौनर्भवस्य पुत्त्रत्वेन पौनर्भवष्टोमसंस्कारयोः साहित्येन निमित्तत्वमुपसंहृतमिति प्रतिपादितं।

प्रासङ्गिकानिति। पौनर्भवप्रकरणस्य प्रकृतत्वेन तद्धर्मस्य प्रासङ्गिकत्वमतोऽप्रस्तुताभिधानं नाशङ्कनीयं। 'एकोद्दिष्टं एकोद्दिष्टविधिकं, अतऊर्द्ध्वं संवत्सरे संवत्सरे प्रेतायान्नं दद्यात् यस्मिन्नहनि प्रेतः स्यादित्याद्युक्तमित्यर्थः। पार्वणविकृतीनामपीति।—अमावास्यायां यस्य प्रेतपक्षेऽथवा पुनः। सपिण्डीकरणादूर्द्ध्वं तस्योक्तः पार्वणोविधिरित्याद्युक्तश्राद्धानामित्यर्थः। अत्र वचनान्तरं प्रमाणयति प्रत्यब्दमिति। सर्वेषेति।—क्षयाहमघामावास्यादिष्वित्यर्थः। अनेक

स्मरणाच। पुत्त्रोद्देशे स्वयंदत्तस्य दासत्वेत्युक्तम्, तत्र दासलक्षणमाह—क्रीता या रमिता मूल्यैः सा दासीति निगद्यते। तस्यां यो जायते पुत्त्रो दासपुत्त्रस्तु स स्मृतः। या सवर्णापि मूल्यैः क्रीता यतो रमितोपभुक्ता सा दासीत्युच्यते पूर्वैः। क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते। न सा दैवे न सा पैत्रे दासीं तां कवयो विदुरिति स्मरणात्। तस्यां जातो दासपुत्त्रः। दास्याः पुत्त्रो 'दासपुत्त्रः' छान्दसः पुम्बद्भावः। यद्वा दासश्चासौ पुत्त्रश्चेति यद्वा दासाभिधः पुत्त्र इति। तद्धर्मानाह—न राज्ञो राज्यभाक् स स्यात् विप्राणां श्राद्धकृन्न च। अधमः सर्वपुत्त्रेभ्यस्तं तस्मात् परिवर्जयेत्। स राज्ञो राज्यभाक् न विप्राणां श्राद्धकृच्च न स्यात्, यस्मात्-सर्वपुत्त्रेभ्योऽधम इत्यर्थः॥

कीदृश इति निरूपितं इदानीं कथमिति निरूप्यते। तत्र शौनकः। शौनकोऽहं प्रवक्ष्यामि पुत्त्रसंग्रहमुत्तमम्। अपुत्त्रो मृतपुत्त्रो वा पुत्त्रार्थं समुपोष्य च। 'संग्रह' संग्रहणविधिं। उपोष्य संग्रहदिनात् पूर्वेद्युः।

---

गोत्राणां दत्तकादीनामित्यर्थः। स्वर्येऽहनि एकोद्दिष्टमेव अमावस्यादिषु पार्वणं भवत्येवेत्यर्थः। एतच्च सामेऽपि, पार्वणेन विधानेन देयमभिमता सदेति वचनात् इति बोध्यं। 'पुत्त्रोद्देशे' द्वादशविधपुत्त्रगणनायामित्यर्थः। दासाभिध पुत्त्र इतीति।—इद तु न रुचिर। दास्या अथ दास स चासौ पुत्त्रश्चेति व्युत्पत्ते सौलभ्यात्। न राज्ञ इति।—राज्यविप्रश्राद्धाधिकारनिषेधेन सर्वथा विप्रान्यश्राद्धे राज्यातिरिक्तधने चाधिकारित्वमस्तीति प्रदर्शितं।

वृद्धगौतमः। वाससी कुण्डले दत्त्वा उष्णीषञ्चाङ्गुलीयकम्। आचार्य्यं धर्म्मसंयुक्तं वैष्णवं वेदपारगम्। मधुपर्केण सम्पूज्य राजानञ्च द्विजान् शुचीन्। राजा च ग्रामस्वामी। बन्धूनाहूय सर्वांस्तु ग्रामस्वामिनमेव चेति वृद्धगौतमस्मरणात्। यदपि तत्रैवाद्ये मधुपर्के ततो दद्यात् पृथिवीशाय शासिने इति पृथिवीशपदं तदपि ग्रामस्वामिपरमेव तस्योपक्रमस्थत्वेन बलवत्त्वात्। द्विजान् शुचीन् 'याचनार्थतया मधुपर्कादिना सम्पूज्येत्यर्थः। बर्हिः कुशमयञ्चैव पालाशं चेध्ममेव च। एतानाहृत्य बन्धूंश्च ज्ञातीनाहूय यत्नतः। 'बन्धून्' आत्मपितृमातृबन्धून्। 'ज्ञातीन्' सपिण्डान्। बान्धवाद्याह्वाने दृष्टार्थं राजाह्वानवत् बध्नन्ति आनन्त्यात्मीयतया परिगृहीतं नरमित्यर्थः शब्दद्वयसामर्थ्यात्। बन्धूनन्नेन सम्भोज्य ब्राह्मणांश्च विशेषतः।

---

तत्रैवेति।—वृद्धगौतमवचने इत्यर्थः। आद्ये उपविष्टात्। तस्योपक्रमेति।—तथाच बन्धूनाहूयेति लिखनानन्तरं संहितायां मधुपर्के ततो दद्यात् इत्यस्य लिखितत्वात् तस्योपक्रमस्थत्वादिति भावः। द्विजानिति।—राजानाञ्च द्विजान् शुचीन् इत्यत्र वृद्धगौतमवचने इत्यर्थः। शुचीनिति।—कपिञ्जलन्यायात् बहुवचनस्य त्रित्वे तात्पर्य्यम्। 'बर्हिः' समित्। 'पालाशं' पलाशवृक्षीयं। अर्कः पलाशः खदिरः अपामार्गोऽश्वत्थ पिप्पलः उदुम्बर शमीदूर्व्वाकुशाश्च समिधः क्रमादिति पारस्करीयात्। दृष्टार्थमिति।—व्यवहार सौकर्य्यार्थं। तथाच तेषामनाह्वानेऽपि पुत्रपरिग्रह सिध्यत्येव। राजाह्वानवदिति।—राजाह्वानस्य दृष्टार्थत्वस्य प्रत्यक्षसिद्धत्वात् अतएवेदानीन्तनराजामामाह्वानं लोके दृश्यते एवेति। ननु बन्धुशब्देन बन्धुस्वजना समा इत्यनेन आसिच्यते तत्कथमुक्तं बन्धूनात्मपितृमातृबन्धूनितीत्यत आह शब्दद्वय-

बन्धूनाहूतान् ब्राह्मणान् पूर्वहूतान् चकारादाहूतान् ज्ञातींश्च संभोज्येत्यर्थः। अग्न्याधानादिकं तच्च कृत्वाज्योत्पवनान्तकम्। दातुः समक्षं गत्वा तु पुत्रन्देहीति याचयेत्। याचनं कारयेत् पूर्वहूतैर्ब्राह्मणैरित्यर्थः। दाने समर्थो दाताऽस्मै योयज्ञेनेति पञ्चभिः। दानसामर्थ्यं यजुपुत्रत्वं पत्न्यनुमतिश्चेत्यादि पञ्चभिर्दद्यादिति शेषः, प्रतिगृह्णीत मानवं सुमेधसं इति मन्त्रलिङ्गात्। देवस्यत्वेति मन्त्रेण हस्ताभ्यां परिगृह्य च। अङ्गादङ्गेत्यृचं जप्त्वा आघ्राय शिशुमूर्द्धनि। वस्त्रादिभिरलङ्कृत्य पुत्रच्छायावहं सुतं। 'पुत्रच्छाया' पुत्रसादृश्यं। तच्च नियोगादिना स्वयमुत्पादनयोग्यत्वम् यथा भ्रात-

---

सामर्थ्यादिति। बन्धुज्ञातिशब्दद्वयोपादानसामर्थ्यादित्यर्थः। चकारादिति।—बन्धूनत्रेन सम्भोज्य ब्राह्मणांश्च विशेषत इति चकारोपादानादित्यर्थः। 'अग्न्याधानादिकं' वह्निस्थापनप्रभृतिकं स्वगृह्योक्तकर्मेत्यर्थः। 'तच्च' पुत्रपरिग्रह इत्यर्थः। 'आज्योत्पवनान्तकं' आज्योत्पवनावसानं, परिशेषाज्यस्योत्पवनरूपोत्पवनावसानमित्यर्थः। पत्न्यनुमतिश्चेति।—माता पिता वा दद्यातामित्यनेन पत्न्यनुमतेरभिधानात्। पञ्चभिर्मन्त्रैरिति शेष। प्रतिगृह्णीतेति।—अत्र प्रतिगृह्णीतेत्यनुमत्यर्थलिङन्तग्रहधातुप्रयोगात् दाने मन्त्राणां करणता स्पष्टमवगम्यते। देवस्यत्वेति।—इति शब्देन सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामीति मन्त्रप्रतीकपरिग्रह। अङ्गादङ्गेति।—इतिशब्देन सम्भवसि हृदयादधिजायसे आत्मा वै पुत्रनामासि स जीव शरदः शतं इति प्रतीकपरिग्रह। ऋचमिति।—ऋगिति पारिभाषिकी, यथा पादेन पादव्यवस्थितिः सा ऋक् इति सिद्ध। नियोगादिनेति।—आदिना वेतनदानपरिग्रहः यौन्यार्थं मातरं कश्चित् प्रमेयप्रतिमकार-

सपिण्डसगोत्रादिपुत्त्रस्य नचासम्बन्धिनि नियोगासम्भवः बीजार्थं ब्राह्मणः कश्चिद्धनेनोपनिमन्त्र्यतामिति स्मरणेन निमन्त्रणसम्भवात्। ततश्च भ्रातृपितृव्यमातुलदौहित्रभागिनेयादीनां निरासः पुत्त्रसादृश्याभावात्। एतदेवाभिप्रेत्योक्तमत्रै तेनैव दौहित्रो भागिनेयश्च शूद्राणां विहितः सुतः। ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचिदिति। अत्रापि भागिनेयपदं पुत्त्रासादृश्यानां सर्वेषामुपलक्षणं विरुद्धसम्बन्धस्य समानत्वात्। विरुद्धसम्बन्धस्य नियोगादिना स्वयमुत्पादनायोग्यत्वं। यथा विरुद्धसम्बन्धो विवाहतत्त्वपरिशिष्टे च वर्जितः। दम्पत्योर्मिथः पितृमातृसाम्ये विवाहो विरुद्धसम्बन्धो यथा भार्य्यास्वसुर्दुहिता पितृव्यपत्नीस्वसा चेति। अस्यार्थः यत्र दम्पत्योर्वधवरयोः पितृमातृसाम्यं वध्वा वरः पितृस्थानीयो भवति वरस्य वा वधूर्मातृस्थानीया भवति तादृशो विवाहो विरुद्धसम्बन्धः, तत्र यथाक्रममुदाहरणद्वयम् 'भार्य्यास्वसुर्दुहिता' श्यालिकापुत्त्री, 'पितृव्यपत्नीस्वसा' पितृव्यपत्न्या भगिनी चेति। तथा प्रकृते विरुद्धसम्बन्धपुत्त्रो वर्जनीय इति, यतो रतियोगः सम्भवति'

---

तामिति वचनात्। भ्रातृसपिण्डेति।—सपिण्डसगोत्रादिपुत्त्रस्येति सामान्यपदवत्त्वेऽपि समानपितृपितामहादिकानां पुत्त्रादेरिति बोध्यं नतु भ्रातृपौत्त्रादेः, तेषां सपिण्डत्वेऽपि स्वयमुत्पादनायोग्यत्वात् अन्यथा भ्रातापि दत्तकः स्यात्। 'असम्बन्धिनि' सप्तमीयं। 'तेनैव' यद्गौतमेनैवेत्यर्थः। पुत्त्रासादृश्यानामिति।—नियोगादिना स्वयमुत्पादनायोग्यानामित्यर्थः। भार्य्यास्वसुर्दुहितेति।—भार्य्यास्वसुर्दुहितुर्वरः पितृस्थानीयो भवति पितृव्यपत्नीस्वसा वरस्य मातृस्थानीया भवतीत्यर्थः।

तादृश: कार्य्य इति यावत्। नृत्यगीतैश्च वाद्यैश्च स्वस्तिशब्दैश्च संयुतम्। गृहमध्ये तमाधाय चरुं कृत्वा विधानत:। यस्त्वहृदेत्यृचेनैव तुभ्यमग्रे त्यृचैकया। सोमोददिदित्येताभि: प्रत्यृचं पञ्चभिस्तथा। एवं सप्तभिर्मन्त्रै: सप्तचर्वाहुतीर्हुत्वेत्यर्थ:।

वृद्धगौतमस्तु विशेषमाह। पायसन्तत्र साज्यञ्च शतसंख्यन्तु हावयेत्। प्रजापते नत्वदेतामित्युद्दिश्य प्रजापतिमिति। एतदनन्तरं ब्राह्मणानां सपिण्डेष्वित्यादय: पुत्त्रदानं प्रयत्नत इत्येतदन्ता: श्लोका: पूर्व्वमेव व्याख्याता:। तदनन्तरं दक्षिणां गुरवे दद्याद्यथाशक्ति द्विजोत्तम:। द्विजोत्तमो ब्राह्मण:। नृपराज्यार्द्धमेवाथ वैश्यो वित्तशतत्रयम्। 'राज्यार्द्धं' अर्द्धराज्योत्पन्नमेकवर्षीयं द्रव्यं, प्रदद्यादर्द्धराज्योत्थमेकवर्षार्ज्जितं धनमिति वृद्धगौतमस्मरणात्। इदञ्च

---

तथाचैवं यत्र यत्र भवति तत्र तत्रैव विरुद्धसम्बन्धोऽनुसरणीय:, दृष्टान्तार्थमुदाहरणद्वयमित्यर्थ:। यत इति चतुर्थीस्थाने सार्व्वविभक्तिकस्तसिल्। स्वस्तिशब्दैर्वेदपाठरूपै: स्त्रीणां ध्वनिरूपादिभिर्वा इत्यर्थ:। तत्र स्त्रीणां ध्वनि: शुभ इति विवाहरूपे माङ्गल्ये तथा दर्शनादस्यापि माङ्गल्यविशेषत्वात्सदाचार इति।

हावयेदिति प्रतिनिधित्वाभिप्राये णिच्। एतदनन्तरमिति।—इत्युद्दिश्य प्रजापतिमिति वचनानन्तरं। पूर्व्वमेव व्याख्याता इति। ब्राह्मणानां सपिण्डेषु इत्यादि पुत्त्रदानं प्रयत्नत इत्यन्तानां वृद्धगौतमोक्तवचनानां शौनकोक्तवचनसाम्यात् शौनकवचनव्याख्यानेन एतद्व्याख्यानस्य भूतत्वादित्यभिप्राय:। गुरवे इति।—गुरुरत्र आचार्य्योऽभिमत:। आचार्य्यं धर्म्मसंयुक्तमित्यनेन तस्यैवोपक्रमस्थत्वात्। नाद्भव

तैत्तिरीयाणान्तु विधिविशेषमाह बौधायनः। पुत्रपरिग्रह-विधिं व्याख्यास्यामः। शुक्रशोणितेत्याद्यन्यत्रानुज्ञानाद्भर्त्तुरित्येतदन्तं वशिष्ठेन समानं प्रतिग्रहीष्यन्नुपकल्पयते द्वे वाससी द्वे कुण्डले अङ्गुलीयकञ्चाचार्य्यञ्च वेदपारगं कुशमयं बर्हिः पर्णमयमिध्ममित्यथ बन्धूनाहूय निवेशनमध्ये व्याहृतिभिर्हुत्वा राजनि चावेद्य परिषदि वागारमध्ये ब्राह्मणवागालम्बेनोपविश्य पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा यद्देवयजनोल्लेखनप्रभृत्याप्रणीताभ्यः कृत्वा दातुः समक्षं गत्वा पुत्रं मे देहीति भिक्षेत ददामीतीतर आह तं परिगृह्णातीति। धर्माय त्वा परिगृह्णामि सन्तत्यै त्वा गृह्णामीत्यथैनं वस्त्रकुण्डलाभ्यामङ्गुलीयकेन चालङ्कृत्य परिधानप्रभृत्यग्निमुखं कृत्वा पक्का जुहोति यस्त्वाहृदाकीरिणामन्यमान इति पुरोऽनुवाक्यमनूद्य यस्मै त्वं सुकृते जातवेद इति याज्यया जुहोत्यथ व्याहृतीर्हुत्वा स्विष्टकृत्प्रभृतिसिद्धमाधेनुवरप्रदानाद्दक्षिणां दद्यादेते च

---

तैत्तिरीयाणान्त्विति।—पुत्रपरिग्रहविधिमित्यादि आहस्म बौधायन इत्यन्तेन वचनेनेत्यर्थः। आप्रणीताभ्य इति।—'प्रणीता' जलपात्रं। कृत्वेति क्रिया इति शेषः। इतरः दाता। अलङ्कृत्येति।—बालकमिति शेषः। अभिमुखमिति।—बालकमभिमुखं कृत्वेत्यर्थः। पक्का चरुमिति-शेषः। पुरोऽनुवाक्यमिति।—याज्ययेति, सामधेन्या ऋचेत्यर्थः। 'स्विष्टकृत्' होमविशेषः। आधेनुवरेति।—धेनुः प्रष्ठवाहानड्वान् हेम वासो हयः क्रमात्। कृष्णागौरायसश्छाग एता वै दक्षिणाः स्मृता इति वचनात्। ददातीति दद्यादित्यर्थः। य एवमिति। यो दत्तक एवमुक्तक्रमेण गृहीतः तुशब्दो भिन्नक्रमे पश्चादौरसः पुत्र उत्पद्यते

शासनी एते कुण्डले एतच्चाङ्गुलीयकं च एवं त्वौरसः पुत्र उत्पद्यते तुरीयभागे सम्भवति इति आहस्म बौधायनः।

यत्तु, वृद्धगौतमीयं। दत्तपुत्रे यथाजाते कदाचित्त्वौरसो भवेत्। पितुर्वित्तस्य सर्वस्य भवेतां समभागिनाविति तदस्य गुणवत्त्वे औरसस्य च निर्गुणत्वे वेदितव्यम्। यथाजात इति विशेषणात् यथा गुणानां जातं समूहो यस्मिन्निति यथाजातो गुणसमूहवानित्यर्थः यथाशब्दस्य गुणयोगे सादृश्ये च शक्तत्वात्।

अतएव मनुः। उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्रिमः। स हरेतैव तद्रिक्थं सम्प्राप्तोऽप्यन्यगोत्रत इति औरसाभावे सर्वरिक्थग्रहणमुक्तवान् तद्युक्तमेवौरसे सत्यर्द्धांशहरत्वं। परिग्रहविध्य-

---

चेत्तदा दत्तकश्चतुर्थभागभागी स्यादित्यर्थः। सम्भवतीति।—स इति शेषः।

तदस्येति।—अस्य दत्तकस्येत्यर्थः। वेदितव्यमिति।—सादृश्ये च शक्तत्वादिति। अनेनात्यन्तसगुणदत्तकानां औरसेन सह समांशभागित्वप्रतिपादनात् य एवं त्वौरस उत्पद्यते तुरीयभागे सम्भवतीति बौधायनवचनस्य सामान्यसगुणविषयत्वमवतिष्ठते। तथा च औरससत्त्वे निर्गुणदत्तकस्य नाधिकारिता। तथा सति औरसक्षेत्रजौ पुत्रौ पितृरिक्थस्य भागिनौ। दशापरे तु क्रमशः पिण्डरिक्थांशभागिन इति मनुवचनं सङ्गच्छते, अन्यथा एतद्वचनस्य निर्विषयतापत्तेः। औरसाभावे तु अत्यन्तसगुणदत्तकानां उपपन्नो गुणैः सर्वैरित्यादिवचनबलात् पितृधनस्य सर्वाधिकारित्वप्रतिपादनात् सामान्यगुणदत्तकानां तदसम्भवेनाशङ्कया य एवं त्वौरस उत्पद्यते दत्तकस्य चतुर्थांशभागित्वमेव निर्गुणदत्तकानान्तु अंशभागित्वमेव नास्ति इति सर्वसामञ्जस्यं स्यात्। तदस्येत्य-

भावे विशेषमाह स एव। अविधाय विधानं यः परिगृह्णाति पुत्त्रकम्। विवाहविधिभाजं तं कुर्य्यान्न धनभाजनमिति। परिग्रहविधिं विना परिगृहीतस्य विवाहमात्रं कार्य्यं न धनदानमित्यर्थः। किन्तु तत्र पत्न्यादय एव धनभाजः, विधिं विना तस्य पुत्त्रत्वानुत्पादात्।

अतएव वृद्धगौतमः। सगोत्रेषु कृता ये स्युर्दत्तक्रीता-

---

गुणवान्नाह्येः स्यात् पैतृके धने इति वचनात्। अविधायेति। विवाहविधिभाजमिति।—विवाहेत्युपलक्षणं ग्रासाच्छादनमपि देयं सर्वथापि तु न्याय्यं दातुं भक्त्या मनीषिणा इति स्मरणात्। तत्सांदृष्टिकन्यायात्। नन्वत्रापरिगृहीतस्य विवाहादौ वृद्धिश्राद्धे के पितरः किंगोत्रोल्लेखः दातुर्दानेन तत्र स्वत्वनाशात् विधानं विना ग्रहीतुश्च पुत्त्रत्वानुत्पादादिति चेन्न। तत्संस्कारादौ दातृगोत्रोल्लेख एव निवृत्तस्वत्वके त्यागे सत्यपि संप्रदानाग्रहणे पुनस्तत्र दातुः स्वत्वमुत्पद्यत एव, दत्त्वा द्रव्यमसम्यक् यः पुनरादातुमिच्छति इत्यादिवचनात्। अतएव त्यागान्निवृत्तमपि दातुः स्वत्वं सम्प्रदानाग्रहणादसम्यक्त्वेन दातुः पुनः स्वत्वमुत्पद्यत एवेति स्मार्त्तसन्दर्भः ससङ्गच्छते अन्यथा तत्र दातुः स्वत्वनाशे ग्रहीतुः पुत्त्रत्वाभावात् तस्य कस्यापि पुत्त्रत्वं न स्यादिति केचित्। वस्तुतस्तु प्रतिग्रहीतुर्दास एव सः तद्विवाहादौ तद्गोत्रोल्लेखश्च स्वयंदत्तस्य दासत्वेयुक्तादासस्येव जनकस्य त्यागात् स्वत्वनाशात् प्रतिग्रहीतुर्वैधग्रहणाभावेऽपि सामान्यतोग्रहणात् स्वत्वं भवत्येवेति अन्यथा जनकस्य त्यागेनापि तत्र स्वत्वनाशेन पुनः पुत्त्रत्वे तद्विवाहदापने जनकस्यैवाधिकारस्यौचित्यात् प्रतिग्रहीतुस्तद्दापनविधेरयुक्तत्वात् अदृष्टार्थकल्पनागौरवञ्चेति बोध्यं।

विधिनैवेति। वाक्यमात्रस्य असति बाधके सावधारणपरत्वादि-

दय: सुता: । विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयत इति विधिनैव गोत्रतां यान्तीति नियम: दानादिविधीनां दत्तकादिलक्षणान्तर्गतत्वेन स्वरूपनिर्वाहकत्वात् यथोक्तं यमद्भिः पुत्रमापदि । अपपूर्वग्रहणं सकलदानविधेरुपलक्षणं तेन च प्रतिग्रहविधिरप्याक्षिप्तो भवति । सम्प्राप्तोऽप्यन्यगोत्रत इति मानवात् सम्यक् विधिना प्राप्त इत्यर्थ: । *क्रीतादय इति* आदिशब्देन कृत्रिमापविद्धस्वयन्दत्तानां ग्रहणं । क्षेत्रजादीन सुतानेतानेकादश यथोदितान् पुत्रप्रतिनिधीनाहु: क्रियालोपान्मनीषिण इति मनुना यथोदितानित्यनेन तत्तल्लक्षणसूचितविधिविशिष्टानामेव पुत्रप्रतिनिधित्वाभिधानात् । अतएव कृत्रिमलक्षणे सदृशन्तु प्रकुर्य्यात *यमिति प्रशब्देन* अपविद्धलक्षणे यं पुत्रं परिगृह्णीयादिति परिशब्देन स्वयन्दत्तलक्षणे च आत्मानं स्पर्शयेत् य इति दानापरपर्य्यायस्पर्शनशब्देन च विधिपरिग्रह एव कृतस्तदभिप्रेत्यैव

---

त्यभिप्राय: । नियम इति ।—अनेन विधेरावश्यकत्वप्रतिपादनात् तदकरणे पुत्रत्वासिद्धिरित्यभिप्राय: । स्वरूपनिर्वाहकत्वादिति विधिपूर्वकदानेनैव दत्तकत्वमित्यर्थ: । विधिं प्रदर्शयति यथोक्तमिति । दानविधेरिति ।—पुत्रं प्रतिग्रहीष्यामीत्याद्युक्तदानविधेरित्यर्थ:, अन्यथा माता पिता वा दद्यातां यमद्भिः पुत्रमापदि इत्यत्राद्भिरिति नोक्ता दद्यातामित्येव ब्रूयात् । क्रीतादय इति, आदिशब्देनेति—प्रधानामेव प्रतिग्रहविधेरावश्यकत्वात् प्रदानविक्रयपरित्यागानामेवैषां सम्भवादिति भाव । क्षेत्रजादीनां क्षेत्रादिजातत्वेन स्वत्वात् परिग्रहासम्भवात् । दानापरेति ।—स्पर्शनं प्रतिपादनमिति कोषात् । दृष्टान्तेनेदं स्पष्टयति

वशिष्ठेनापि तथा प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवत इत्युपक्रम्य परिग्रहविधिरभिहितः पुत्त्रं परिग्रहीष्यन्निति परिग्रहवचनेन च कृत्रिमस्वयन्दत्तपरिग्रहेऽप्येष विधिरनुसन्धेयः, मनुना तत्तदुपसर्गेण सूचनात्। तस्मादेषां पञ्चानां पुत्त्राणां शौनकवशिष्ठान्यतमविधिपरिग्रहेणैव पुत्त्रत्वं नान्यथा। यथा क्षेत्रजे उपपादितं मनुयाज्ञवल्क्याभ्यां। नियुक्तायामपुत्त्रायां पुत्त्रो जातोऽविधानतः। नैवार्हः पैतृकं रिक्थं पतितोत्पादितो हि सः। नियुक्तौ यौ विधिं हित्वा वर्त्तेयातां तु कामतः। तावुभौ पतिताविद्यादिविध्यन्वयव्यतिरेकानुसरणात्।

यत्तु मिताक्षराटीकायां सुबोधिन्यां तत्र स्वत्वं पुत्त्रत्वादिवल्लौकिकं मन्यन्ते वृद्धा इत्यभिहितं तदुक्तवचनविरोधात्, अथ दत्तक्रीतकृत्रिमपुत्त्रिकापुत्त्राःपरपरिग्रहेणार्षेण येऽत्र जातास्तेऽसद्गतकुलीना द्व्यामुष्यायणा भवन्तीति पैठीनसिना आर्षेण त्र्युक्तेनैव परपरिग्रहेण पुत्त्रत्वाभिधानाच्च विरुद्धमित्युपेक्ष-

---

यथेति। पतितोत्पादितो हि स इत्युक्तयातित्वं प्रदर्शयति नियुक्तौ याविति। यथा विध्यन्वयव्यतिरेकानुसारेण मनुयाज्ञवल्क्याभ्यां विधानमुपपादितं तथात्रेति भावः। एतेन क्षेत्रजादिषु शौनकवशिष्ठान्यतमोक्तविधानं नास्ति तत्र मनुयाज्ञवल्क्याभ्यां विध्यन्तरस्य विहितत्वादिति प्रतिपादितं।

मिताक्षराटीकासुबोधिनीमतं दूषयति यत्त्विति। उक्तवचनेति।— अविधाय विधानं य इत्युक्तवचनविरोधादित्यर्थः। विरुद्धमिति।—

णीयम्। न सङ्गताः कुलीना- जनककुलीना येषां ते ते च ते अद्व्यामुष्यायणाश्चेति ये आर्षेण विधिना परिगृहीतास्ते जनककुलीनासम्बद्धाः अतएव अद्व्यामुष्यायणा भवन्तीत्यर्थः। यद्वा जनकपरिग्रहीत्रोर्द्वयोरपि संस्कारकत्वे द्व्यामुष्यायणत्वमित्यग्रे वक्ष्यमाणत्वात् द्व्यामुष्यायणा इत्येव पाठोऽस्तु। मेधातिथिरपि दत्तकादिषु संस्कारनिमित्तमेव पुत्त्रत्वमाह सत्यपि प्रयोगे इन्द्रादिशब्दवल्लोकतोऽर्थातिशयात् शास्त्रे चोत्पत्तिविधानात् भार्य्यादिव्यवहारवत् पुत्त्रत्वव्यवहारोऽवगन्तव्य इत्यादिग्रन्थसन्दर्भेण। तस्मात् दत्तकादिषु संस्कारनिमित्तमेव पुत्त्रत्वमिति सिद्धं। दानप्रतिग्रहहोमाद्यन्यतमाभावे तु पुत्त्रत्वाभाव एवेति। इदानीमौरस-

तथेति पूर्व्वमान्वितीत्यर्थः। न सङ्गता इति।—असम्बन्धिन इत्यर्थः। तथाच जनककुले तद्दत्तकादीनां सम्बन्धो नास्तीति प्रतिपादितं। अत्र मेधातिथिसम्मतं प्रमाणयति मेधातिथिरपीति। संस्कारनिमित्तमेवेति।—एवशब्दः अयोगव्यवच्छेदकः नान्ययोगव्यवच्छेदकः परिग्रहहोमादीनामप्यावश्यकत्वादिति। तदभावादपि पुत्त्रत्वाभाव इत्युक्तमेव प्राक्। सत्यपि प्रयोग इति।—पुत्त्रत्वव्यपदेशे सत्यपि इत्यर्थः। इन्द्रादिशब्दवत् परमैश्वर्यशालिन इन्द्रादिव्यपदेशस्य लोकतः सिद्धत्वेऽपि तस्मात् यौगिकार्थात् लौकिकात् अर्थातिशयेन व्यासत्या प्राधान्यावसायकत्वात् शास्त्रे पुत्त्रं प्रतिगृह्णीयात् इत्याद्युत्पत्तिविधानात् दत्तकादीनां जातत्वेऽपि उत्पत्तिविधानात् भार्य्यादिव्यवहारवत् संस्कृतस्त्रीत्वेन भार्य्यादिव्यपदेशवत् मनुष्यभोग्यस्त्रीत्वेन, तथात्वे वराङ्गनादीनामपि भार्य्यात्वापत्तेः। पुत्त्रत्वव्यवहार इति।—संस्कृतपुत्त्रत्वेन तद्व्यवहारः नतु तत्सन्तानत्वेनेति भावः।

पुत्त्वापादकक्रिययैव दत्रिमस्य प्रतिग्रहीतृधने स्वत्वं तद्गोत्रत्वञ्च भवति। दातृधने तु दानादेव पुत्त्वनिवृत्तिद्वारा दत्रिमस्य स्वत्वनिवृत्तिर्दातृगोत्रनिवृत्तिश्च भवतीत्युच्यते इति चन्द्रिकाकारः।

ननु मनुवचनात् जनकगोत्रनिवृत्तावपि प्रतिग्रहीतृगोत्रप्राप्तौ किं मानमित्यत आह वृद्धमनुः। दत्तक्रीतादिपुत्त्राणां बीजवप्तुः सपिण्डता। पञ्चमी सप्तमी तद्वत् गोत्रं तत्पालकस्य चेति। दत्तक्रीतादिपुत्त्राणां बीजवप्तुर्जनकस्य सपिण्डताख्यैव दानादिनापि सा न निवर्त्तते तस्याः अवयवान्वयरूपतया यावत् शरीरं दुरपनेयत्वात्, अनेनावयवान्वय एव साापिण्ड्यं न पिण्डान्वय इत्युक्तं भवति पिण्डान्वयस्य व्यपैति दद्तः स्वधेत्युपगमात्रगमात्। सा च सपिण्डता कियतीत्यपेक्षायामाह पञ्चमी सप्तमीति, पञ्चानां पूरणी पञ्चमी पञ्चपुरुषव्यवधीत्यर्थः, एवं सप्तमी।

गौतमोऽपि। ऊर्द्ध्वं सप्तमात् पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमादिति। अत्र बीजिग्रहणं दत्तकाद्युत्पादकानां सर्वेषामपि संग्रहार्थं न केवलं क्षेत्रजोत्पादकस्यैव। य एतेऽभिहिताः

---

दत्तक्रीतादिपुत्त्राणामिति। पञ्चमी सप्तमीति।—मातृपितृकुलाभिप्रायेण मातृपितृसम्बन्धा आसप्तमादविवाह्या कन्या भवन्ति आपञ्चमादन्येषामिति सुमन्तुवचने सप्तमात् पितृबन्धुभ्यो बीजिनः मातृबन्धुभ्यश्च पञ्चमादिति वक्ष्यमाणगौतमवचनेन चैकमूलत्वात्। केचित्तु सप्तमी पञ्चमीति व्यत्ययपाठोऽपि मुख्यगौणभावेन वर्णयन्ति। अन्यांस्तु पञ्चमीत्यधिकदोषाय इति वदन्ति। मातृपितृसम्बन्धा आसप्तमादविवाह्या कन्या भवन्ति आपञ्चमादन्येषामिति सुमन्तुवचनात्। अपरे तु

पुत्त्राः प्रसङ्गादन्यबीजजाः। यस्य ते बीजतो जातास्तस्य ते नेतर-स्यतिति मनुस्मरणात्। तत्र ते पुत्त्रा इति पुत्त्रत्वप्रतिपादनं सापिण्ड्यप्रतिपादनार्थं न तु पुत्त्रत्वोत्पादनार्थम्, पुत्त्रान् द्वादश यानाहेत्यादिमतिग्रहीतृपुत्त्रत्वप्रतिपादनविरोधात्, नेतरस्य प्रति-ग्रहीतुरित्यर्थः। नन्वेवं कन्यावदुभयत्रापि सापिण्ड्यमास्तां प्रतिग्रहेण गोत्रवत् सापिण्ड्यस्याप्युत्पत्तेरिति चेन्नैवम्। सगो-त्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः। विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते इति वृद्धगौतमस्मरणविरोधात्। ये दत्तादयः सुताः सगोत्त्रेषु सगोत्रमध्ये कृतास्ते विधिना गोत्रतां सन्ततित्वं यान्ति परन्तु तैः सह विधिना सापिण्ड्यं न विधीयते नोत्पद्यत इत्यर्थः, सगोत्रेष्वपि सापिण्ड्यानुत्पत्तौ परगोत्रे सुतरां सापिण्ड्यानुत्पत्तिरुक्ता युक्तश्चैतत् पित्रास्वेन भर्त्रा सहैक-

यत्तु देशानुरूपेण कुलमार्गेण चोद्वहेत्। नित्यं स व्यवहार्यः स्या-दित्यादिवचनबलात् देशव्यवहारानुसारेण सप्तमीपञ्चमव्यवस्थां वर्ण-यन्ति। 'तद्वत्' सपिण्डतावत् गोत्रमपि जनकस्य, न केवलं जनकस्य अपि तु तत्पालकस्य प्रतिग्रहीतुरित्यर्थः', चकारश्रवणात् एतच्च द्व्या-मुष्यायणमात्रविषयं वेदितव्यं, अन्यथा गोत्ररिक्थे जनयितुरित्यादि-वचनविरोधात्। नन्वेवमिति।—'कन्यावत्' वाग्दत्तावत् तस्य एव भर्तृकुले पितृकुले च त्रैपुरुषिकाशौचकरसापिण्ड्यसत्त्वात् ऊढाया भर्तृकुलमात्रसापिण्ड्येन उभयत्र सापिण्ड्यासम्भवेन दृष्टान्तानुपपत्तेः। यद्वा ऊढाया अपि पितृकुले भर्तृकुले च विवाहार्थसापिण्ड्यसत्त्वात् तदभिप्रेत्य कन्यावदित्युक्तं युक्तमेव। दूषयति नैवमिति। नोत्पद्यते इति।—पाञ्चपौरुषिकं साप्तपौरुषिकं अवयवान्वयसापिण्ड्यमिति

शरीरारम्भकत्वेन च यथा उभयत्रापि सापिण्ड्यं सिध्यति न तथा दत्तके पित्रारब्धत्वेऽपि प्रतिग्रहीत्रा सहैकशरीरारम्भकत्वाभावात्।

अतएव देवलः। धर्मार्थे वर्द्धिताः पुत्रास्तत्तद्गोत्रेण पुत्रवत्। अंशपिण्डविभागित्वं तेषु केवलमीरितमिति केवलशब्देन सापिण्ड्यमेव निरस्तवान् गोत्रांशपिण्डानां विधानात्। नन्वेतत् प्रकृतार्थानुपयोगिधर्मपुत्रविषयत्वात् तथाहि तत्तद्गोत्रेण तस्य तस्यैव गोत्रेण ये पुत्रवत् धर्मार्थे वर्द्धिताः तेषु पुत्रेषु केवलमंशपिण्डविभागित्वमेव न वर्द्धकसापिण्ड्यमित्यर्थः, तेनैतत्पुत्रस्यैव वर्द्धकसापिण्ड्याभावं बोधयति न दत्तकस्येति चेत् मैवम्। पुत्रान् द्वादश यानाह नृणां स्वायम्भुवो मनुरिति परिसङ्ख्याविरोधेन धर्मपुत्रानभ्युपगमात्। अभ्युपगमेऽपि वा पत्न्यादिध्वगणनेनांश-

---

भेदः, प्रतिग्रहीत्रादीनां षैपुरुषिकसापिण्ड्यस्य वक्ष्यमाणत्वात्। पित्रारब्धत्वेनेति। एतत् षाट्कौशिकं शरीरं त्रीणि मातृतः त्रीणि पितृतः अस्थिस्नायुमज्जानः पितृतः त्वङ्मांसरुधिराणि मातृतश्चेति गर्भोपनिषदः। भर्त्रा सहैकेति।—अस्थिभिरस्थीनि मांसैर्मांसानि त्वचा त्वचमिति श्रुतेः। प्रतिग्रहीत्रेति।—दत्तकेनैकशरीरारम्भकत्वप्रतिपादकवचनाभावादित्यर्थः।

प्रकृतार्थानुपयोगीति।—दत्तकस्य प्रतिग्रहीतृकुले सापिण्ड्यानुसृतिः प्रकृतार्थः। धर्मपुत्रविषयत्वं वचनस्य व्यवस्थापयति तथाहीति। एतत्पुत्रस्यैवेति।—धर्मपुत्रस्यैवेत्यर्थः। दूषयति मैवमिति। ननु नास्ति द्वादशसंख्याविरोधः धर्मपुत्रस्य दत्तकेऽन्तर्भावादित्यत आह अभ्युपगमेऽपीति। पत्न्यादिष्विति।—अप्रहणेति।—सांश-

भागित्वासम्भवात् अपकृष्य सापिण्ड्यनिषेधासङ्गतेश्च। तस्मात् दत्तपुत्रविषयमेवैतत् अंशभागित्वप्रदर्शनात्। तत्र चायमर्थः धर्मार्थं स्वस्यालोकतापरिहारकधर्मसम्पत्त्यर्थं तत्तद्गोत्रेण जनकापेक्षया भिन्नगोत्रेणापि परिग्रहीतृः पुत्रवत् पुत्रप्रतिनिधितया परिगृह्य ये पुत्रा वर्द्धिताः तेषु केवलं परिग्रहीतृंशपिण्डविभागित्वमेव न सापिण्ड्यमिति। तस्मात् अत्र दत्तके न परिग्रहीतृसापिण्ड्यं किन्तु जनककुल एव साप्तपौरुषिकं सापिण्ड्यमिति सिद्धं।

ननु तच्छब्देन सन्निधानात् वीप्सापेक्षितश्रुतबहुत्वानां पुत्राणामेव परामर्शो गम्यते न वर्द्धकानां पुत्रिणां व्यवहितत्वात् सन्दिग्धबहुत्वानां वीप्सान्वयायोग्यत्वात् आत्मनि परोक्षव-

---

रिक्थानुगः पिण्ड इत्यनेनांशभागिन एव सापिण्ड्याभ्युपगमादिति भावः। दत्तपुत्रविषयमेवैतदिति।—एतत् धर्मार्थमिति वचनमित्यर्थः। साप्तपौरुषिकमिति।—अवयवान्वयरूपमित्यर्थः।

नन्विति। तच्छब्देन तत्तद्गोत्रेणेति तच्छब्देनेत्यर्थः। धर्मार्थं वर्द्धिताः पुत्रा इति पुत्रपदस्य तत्तद्गोत्रेणेति तच्छब्देन सह नैकट्यात् आसत्त्या अन्वयसौलभ्यादिति भावः। वीप्सया अपेक्षितानि आकाङ्क्षितानि श्रुतानि पुत्रा इति वचनप्राप्तानि नत्वश्रुतानि वर्द्धकैरिति बहुत्वानि येषामिति विग्रहः, तथाच तत्तद्गोत्रेण पुत्राणां तत्तद्गोत्रेणैवान्वयः समुचितः पुत्राणां बहुत्वस्य वचनप्राप्तत्वात्, नतु वर्द्धकानां तत्तद्गोत्रेणान्वयो युक्तः, वर्द्धकानां वचनाप्राप्तत्वेन व्यवहितत्वादिति। सन्दिग्धबहुत्वानामिति।—वर्द्धकेनेत्येकवचनान्तेनापि अन्वयसम्भवात् बहुत्वस्य सन्दिग्धत्वादिति भावः। आत्मनि परोक्षव-

निर्देशकतच्छब्दान्वयानुपपत्तेः अपरोक्षनिर्देशकस्यशब्दस्यैवौचित्या-च्चेति चेत् मैवं वादीः। सर्वनाम्नां बुद्धिस्थे शक्तिरिति न्यायेन बुद्धिस्थतायाः प्राधान्यायत्तत्वात् प्राधान्यञ्च च संस्कार्य्यत्वेन फलान्वयेन वा सम्भवात् पितुः पुत्रेण कर्त्तव्या पिण्ड दानोदकक्रियेत्यादिवचनपर्य्यालोचनया पुत्रकर्त्तृकपिण्डदानादि-क्रियया पितुः संस्कार्य्यत्वावगमात् पुत्रेण लोकान् जयतीत्यादि वचनबलात् पितुरेव पुत्रकरणकभावनाभाव्यलोकरूपफलयोगि-तया प्राधान्यात् तच्छब्देन परामर्शो युज्यते। यथा तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षेत्यत्र आमिक्षायाः संसृष्ट-दधिपयोरूपत्वेन सान्नाय्यविकारत्वे स्थिते पूर्वप्रचित्या सप्तमी-निर्द्दिष्टस्य पयसो गुणत्वेन द्वितीयानिर्द्दिष्टस्य दध्नः प्रधानत्वात्

दिति।—आत्मनि स्वरूपे उपस्थिते इति यावत्। अपरोक्षेति।—प्रत्यक्षवन्निर्देशकवर्द्धकादिरूपवाचकपदस्येत्यर्थः, तथाच वर्द्धकोऽयं-मेति वाचकपदे प्रयोक्तव्ये तच्छब्दाभिधेयत्ववाचकपदप्रयोगस्यान्याय्यत्वा-दिति भावः। दूषयति मैवं वादीरिति। बुद्धिस्थताया इति।—दत्ता-त्मनेदं द्रढयति यथेति। सान्नाय्यविकारत्वमिति।—दधिरूप-मित्यर्थः। तस्यैवेति।—पयस एवेत्यर्थः। सान्नाय्यविकारत्वमिति।—पयोरूपमित्यर्थः। तथाच सान्नाय्यविकाररूपपयस एव देवतासम्बन्धः, तेनैव होमसिद्धेः, न तु सान्नाय्यविकाररूपस्य दध्नः, तेन वैश्वदेवहोमे यागासिद्धेरिति तात्पर्य्यं। इदन्तु न सम्यक्। तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनं इत्यत्र उपस्थितयोरामिक्षा-वाजिनयोर्द्वयोरेव वैश्वदेवदेवतासम्बन्धेनान्वयसम्भवेन आमिक्षाया प्रधानत्वात् तस्या एव देवतासम्बन्धः न तु वाजिनस्य, तस्य आमिक्षो-

तस्यैव तच्छब्देन परामृष्टस्य देवतासम्बन्धात् प्रायंदोहविकार-त्वमित्युक्ते सिद्धान्तिना कर्मभूतेनापि दध्ना पयसो व्याप्यमानत्वेन दध्ना पयः संस्कुर्य्यादिति वाक्यार्थस्य पर्य्यवसानत्वेन पयस एव प्रधानत्वं, तस्यैव तच्छब्देन परामृष्टस्य देवतासम्बन्ध इति प्रातर्दोहविकारत्वं साधितम्, तद्वत् प्रकृतेऽपि पितुः संस्कार्य्यत्वेन प्रधानत्वात् तच्छब्दादेव तस्यैव परामर्श इति युक्तम्। नन्वेवं दत्तकस्य प्रतिग्रहीतृकुले सापिण्ड्याभावे कथं विवाहो न स्यादितिचेत् सत्यम्। सगोत्रत्वादिति ब्रूमः। तर्हि तद्भगिन्यादिसन्ततौ विवाहोऽस्तु सगोत्रत्वसपिण्डत्वयोरभावात्, नन्वाहत्य निषेधकं वचनमुपलभामहे प्रत्युत सावित्रीं यस्य यो दद्यात् तत्कन्यां न विवाहयेत् तद्गोत्रे तत्कुले वापि विवाहो नैव दोषकृदित्याद्यनुकूलमेव वचनमस्ति। नचेष्टापत्तिः अविच्छिन्नाविगीतसकलदेशीयशिष्टाचारविरोधात् तस्मात् किं तत्राविवाहनिमित्तमिति?।

अत्र कैश्चिदुच्यते असपिण्डा च या मातुरसगोत्रा च या

---

देशेन प्रकृतत्वादप्रयोजकत्वादिति बोध्यं। सगोत्रत्वादिति।—असपिण्डा च या मातुरसगोत्रा च या पितुरिति मनुवचनादिति भावः। तद्भगिन्यादिसन्ततौ प्रतिग्रहीतुर्भगिन्यादिसन्ततावित्यर्थः। तद्गोत्रे इति।—सावित्रीदातुः सगोत्रे सपिण्डसमानोदकसाधारणे इत्यर्थः। 'तत्कुले' सावित्रीदातुर्दौहित्रादिरूपे कुले। अनुकूलमेवेति।—प्रतिग्रहीतुः पितृत्वेन तत्सावित्रीदातृत्वमप्रसक्तेः।

अत्रेति। प्रसक्ता आर्य्येत्यर्थः, प्रशंसार्थकत्वे सपिण्डाया सगोत्रायाश्च विवाहे भार्य्यात्वापत्तेः। नच तद्युक्तं। तत्र भार्य्यात्वानुत्पत्ते-

पितुः। सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने इत्यत्र मनुवाक्ये स्वस्यासापिण्ड्येऽपि वक्तव्ये यत् पितुरसपिण्डावचनं तत् दत्तकस्य प्रतिग्रहीतृसपिण्डाया विवाहो माप्रसांक्षीदित्येवमर्थं अन्यथा पितृदारके सापिण्ड्ये मूलपुरुषादष्टमस्य वरस्य मातृदारके सापिण्ड्ये मूलपुरुषात् षष्ठ्याः कन्याया विवाहो न स्यात् पितुः सपिण्डत्वेन असपिण्डताभावात् न चेष्टापत्तिः पञ्चमात् सप्तमादूर्द्ध्वं मातृतः पितृतस्तथेत्यादिसकलस्मृतिनिबन्धशिष्टाचार-

---

निबन्धृभिर्व्यवस्थापितत्वात्। दारकर्मणि भार्य्यात्वोत्पादकविधावित्यर्थः। 'मैथुने' स्त्रीपुंससाध्याग्न्याधानपुत्रोत्पत्त्यादौ इत्यर्थः। असपिण्डा चेति चकारात् मातुरसगोत्रा असगोत्रा चेति चकारात् पितुरसपिण्डा। अन्यथेति।—मनुवचनस्य दत्तविषयत्वाभावेन औरसविषयत्वे इत्यर्थः। पितृदारक इति।—गणनायां पितृप्रतियोगिके पितरमादाय सप्तमे इत्यर्थः। मूलपुरुषादष्टमस्येति।—पितरमादाय उपरितनसप्तममपेक्ष्य अधस्तनस्य वरस्याष्टमत्वादिति भावः। मातृदारके मातरमादाय सप्तमे इत्यर्थः। तथाच मातरमारभ्यासप्तममूर्द्ध्वतनपुरुषस्य कन्यासन्ततिः अविवाह्येत्यापद्येत पितुः सपिण्डत्वात्। ननु वरस्य मातृमातामहादीनां तत्सन्ततीनां वा कथं पितुः सापिण्ड्यप्रसक्तिरिति चेदत्र ब्रूमः। मातुरवयवेन पितृवयवस्यैकत्वस्य अस्थिभिरस्थीनि मांसैर्मांसानि त्वचा त्वचमित्यादिश्रुत्यावष्टम्भादिति। औरसस्य वरस्येत्यर्थः। ननु असपिण्डा च या पितुरिति पितृपदश्रवणात् पितुश्च जनके मुख्यत्वात् मनुवचनस्य औरसविषयत्वमेवोचितमित्यत आह मातृतः पितृतः इति।—वरमादाय मातृतः पितृतः पञ्चमात् सप्तमादूर्द्ध्वमित्यर्थः। 'मातृतः' मातृपक्षे, 'पितृतः' पितृपक्षे

सपिण्डप्रयोग आदत्त, तथापि सार्व्वविभक्तिकत्वशङ्कायां ऊर्द्धं सप्तमात् पितृबन्धुभ्यो वीजिनश्च मातृबन्धुभ्यः पञ्चमादिति गौतमवाक्ये पञ्चम्या निर्णय इति। न किञ्चित् समाधानमिति समाधानान्तरं वक्तव्यम्।

तदपरे आहुः। क्षेत्रजादीन् सुतानेतानेकादश यथोदितान्। पुत्त्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः इत्यत्र वाक्ये क्षेत्रजादीनां पुत्त्रप्रतिनिधित्वाभिधानात् प्रतिनिधिस्तद्धर्म्मा स्यादिति न्यायेन सकलौरसधर्म्मप्राप्त्या प्रतिग्रहीत्रादिपितृसापिण्ड्यवर्ज्जनं सेत्स्यतीति तन्न न सापिण्ड्यं विधीयत इत्यनेन निषिद्धस्य सापिण्ड्यस्य अतिदेशासम्भवेनाप्राप्त्या तद्वर्ज्जनासम्भवात् एतेन पुत्त्रनाम्ना औरसधर्म्मातिदेशात् प्रतिग्रहीत्रादिपितृसापिण्ड्यवर्ज्जनसिद्धिरित्यपास्तं न तौ पशौ करोतीतिवत् निषिद्धस्य सापिण्ड्यस्य अतिदेशासम्भवेन वर्ज्जनासम्भवात् तस्मात् अनन्यगत्या वाचनिकमेव प्रति-

---

मारभ्य षट् पुरुषाः पिता समम इति वर्णितं। नन्वेवं दत्तकस्य प्रतिग्रहीतृकुले सापिण्ड्याभावे इत्यादि पूर्व्वपक्षस्य यत् समाधानं केनचित् कृतं तत्र सम्यक् समाधानान्तरं वक्तव्यं, तस्मात् अनन्यगत्या वाचनिकमित्यादि ग्रन्थसन्दर्भेणेति शेषः।

तदपरे आहुरिति।—क्षेत्रजादीनित्यादि सेत्स्यतीत्यन्तेन यत् समाधानं तदाहुरित्यन्वयः। तद्दूषयति तन्न नेत्यादिना। तद्वर्ज्जनासम्भवादिति।—वर्ज्जयिता च स्या प्राप्तिश्चेति शेषः। निषिद्धस्य प्राप्तिपूर्व्वकत्वादिति भावः। मतान्तरं दूषयति एतेनेति। न तौ पशाविति। पशौ पशुयागे तौ आज्यभागौ न कुर्य्यादित्यर्थः।

गृहीतृकुले सापिण्ड्यं अभ्युपगन्तव्यमिति तदुच्यते। द्विविधं हि सापिण्ड्यं अवयवान्वयेन पिण्डान्वयेन चेति तत्रावयवान्वयसापिण्ड्यस्य दत्तके प्रत्यक्षबाधितत्वेन हेमाद्रिः पिण्डान्वयमेवोपादाय दत्तकादीनां प्रतिग्रहीतृकुले त्रिपुरुषमेव सापिण्ड्यं व्यवातिष्ठिपत्।

तथाच कार्ष्णाजिनिः। यावन्तः पितृवर्गाः स्युस्तावद्भिर्दत्तकादयः। प्रेतानां योजनं कुर्य्युः स्वकीयैः पितृभिः सह। दाभ्यां सहाय तत्पुत्राः पौत्रास्त्वेकेन तत् समं। चतुर्थपुरुषे छेदस्तस्मादेषा त्रिपौरुषीति। अस्यार्थः। दत्तकादयः पुत्राः प्रेतानां प्रतिग्रहीत्रादीनां पितॄणां औरसत्वे शुद्धदत्तकत्वे द्व्यामुष्यायणत्वे वा यावन्तः पितृवर्गाः त्रयः षड् वा तत्राद्ये पितृपितामहप्रपितामहास्त्रयः, द्वितीये प्रतिग्रहीतृपितामहप्रपितामहास्त्रयः, तृतीये प्रतिग्रहीत्रादयस्त्रयः जनकादयश्च त्रय इति षट् तावद्भि-

---

तथाहि यथा दर्शपौर्णमासयागप्रकृतिके पशुयागे प्रकृतिवद्विकृतिरित्यनेनाघाराज्यभागयोः प्राप्तावपि निषेधेन न प्राप्तिः तथात्रापीत्यर्थः।

आद्य इति।—औरसत्वे इत्यर्थः। पितृपितामहेति।—प्रतिग्रहीतुः पितृपितामहप्रपितामहा इत्यर्थः। द्वितीय इति।—दत्तकस्य प्रतिग्रहीतुर्दत्तकत्वे इत्यर्थः। प्रतिग्रहीत्रिति।—दत्तकस्य प्रतिग्रहीतुः प्रतिग्रहीतृपितामहप्रपितामहास्त्रय इत्यर्थः। तृतीय इति।—दत्तकस्य प्रतिग्रहीतुर्द्व्यामुष्यायणत्वे इत्यर्थः। प्रतिग्रहीत्रादय इति।—दत्तकस्य प्रतिग्रहीतुः प्रतिग्रहीत्रादयस्त्रयः जनकादयश्च त्रय इत्यर्थः। 'योजनं' सपिण्डनं। स्वकीयत्वविशेषणोपादानमिति।—तथा च प्रतिग्रहीतुर्दत्तकपुत्रकर्तृकसपिण्डीकरणे प्रतिग्रहीतुरेव पित्रादीनां देवतात्वं

विरोधात्। नचेदं दूषणं दत्तकेऽपि समानं, सप्तमस्य तस्य षष्ठ्याः कन्यायाः पितुः सपिण्डत्वेन अविवाह्यत्वप्रसङ्गादिति वाच्यम्। सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तेत इति वक्ष्यमाणवाक्येन सप्तमस्य दत्तकपितुर्मूलपुरुषासपिण्डत्वेन षष्ठ्याः कन्यायास्तदसापिण्ड्येन षष्ठ्याः सप्तमस्य च पितुः सपिण्डत्वाभावादित्युक्तमेव। तस्मात् दत्तकसापिण्ड्यनिर्णायकमिदमेव वचनमिति कानुपपत्तिः तदतिभ्रान्तप्रलपितं विकल्पासहत्वात्, तथाहि किमिदं दत्तकस्यैव सापिण्ड्यनिर्णायकं उत दत्तकौरसयोरुभयोरिति। नाद्यः। द्वेधा हि अस्य वचनस्य दत्तकविषयता सम्भवेत् दत्तकप्रक्रमाद्वा दत्तकसापिण्ड्यनिर्णायकविशेषवचनैकवाक्यत्वाद्वा नचैकोभयमप्यस्ति असुपलम्भात्। किञ्चास्य दत्तकपरत्वे अन्वयं पितृपदं गौण्या प्रतिग्रहीतृपितृपरं स्यात् तच्च अनिष्टं न विधौ

इति वार्थः। तथाचैतद्वचनस्यौरसविषयत्वमेव प्रसिद्धमित्याशयः। सप्तमे विनिवर्त्तेत इतीति। सप्तमे पुरुषे सपिण्डता निवर्त्तते तथाच दत्तकस्थले षट् पुरुषाः सपिण्डा इति केचिदिति वादिनामाशयः। सप्तमस्येति। दत्तकपितुर्विशेषणमिदं तदसापिण्ड्येन मातृसापिण्ड्येनेत्यर्थः। षष्ठ्याः सप्तमस्य च षष्ठ्याः कन्यायाः सप्तमस्य वरस्येत्यर्थः। तस्मादिति। इदं वचनं असपिण्डा च या मातुरित्यादिवचनं। दूषयति तदतिभ्रान्तेत्यादिना। विकल्पासहत्वादिति।—जिज्ञासाया अनिवर्त्तकत्वादित्यभिप्रायः। विकल्पं विवृणोति तथाहीति।—अन्वयं असपिण्डा च या मातुरसगोत्रा च या पितुरिति वचनस्थं पितृपदमित्यर्थः। मुख्यार्थत्वे सम्भवति गौणत्वस्यान्याय्यत्वादिति भावः। स

परः शब्दार्थ इति न्यायविरोधात्।—नाप्यन्यः पितृपदे युगपद्वृत्तिद्वयनिषेधात्। नच गङ्गायां मीनघोषावित्यत्रेव वृत्त्यन्तरतात्पर्य्यग्राहकं प्रमाणमस्ति। तस्मात् औरसविषयमेवेदं वचनं गर्भाधानादिप्रक्रमात् पञ्चमात् सप्तमादूर्द्ध्वमितिवचनान्तरैकवाक्यत्वाच्च। नचास्यौरसपरत्वे कूटस्थात् अष्टमस्य वरस्य षष्ठीकन्यायाश्च अनुद्वाह्यत्वप्रसङ्गः पितुरसपिण्डत्वाभावादित्युक्तमेव दूषणमिति वाच्यम् तस्य पितुरिति पञ्चम्यां षष्ठीभ्रमनिबन्धनत्वेन अदूषणत्वात्। अतएव योगीश्वरेण मातृतः पितृतस्तथेत्यत्र पञ्चमीत्वनिर्णायक-

---

विधौ पर शब्दार्थ इति।—विधौ विधिवाक्ये परो गौणः शब्दार्थो न प्रयुज्यते इति शेषः। न चेति। गङ्गायां घोषमीनौ स्त इत्यत्र वृत्त्यन्तरतात्पर्य्यग्राहकप्रमाणमस्ति तथा प्रकृते नेति व्यतिरेकेण दृष्टान्तः। तस्मादिति।—इदं वचनं असपिण्डेति मनुवचनं। गर्भाधानादीति। ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा इत्यादिनोपक्रान्तत्वात् तथा च तात्पर्य्यमपेक्ष्य प्रकरणस्य बलवत्त्वात्। तथाचोक्तं।—श्रुतिर्द्वितीया क्षमता च लिङ्गं, वाक्यं पदान्येव तु संहतानि। सा प्रक्रिया या कथमित्यपेक्षा, स्थानं क्रमो योगबलं समाख्या इति। सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते इत्यस्य तु दत्तकविषयत्वमेव औरसपरत्वे पञ्चमात् सप्तमादित्यस्य विरोधापत्तेः, तथा च औरससापिण्ड्यस्य सप्तमे गते निवृत्तिः दत्तकस्य तु सप्तमे निवृत्तिरिति दत्तकौरसयोः सापिण्ड्यभेदादिति भावः। पञ्चमात् सप्तमादिति।—तथाचैतद्वचनस्य औरसविषयत्वस्य प्रसिद्धेरिति भावः। कूटस्थादिति।—मूलपुरुषादित्यर्थः। पितुरिति।—एतदुपलक्षणं मातुरित्यपि बोध्यं। पितुरितीति।—तथाच पितरमारभ्य षट् पुरुषाः वरस्य सप्तम न तु पितुः पितर-

त्रिभिस्त्रिभिः षड्भिर्वा सह प्रतिग्रहीत्रादीनां योजनं कुर्य्युः प्रतिग्रहीतुः पितुर्ये यावन्तः पितृवर्गाः त्रयः षड् वा तेषां सर्वेषां स्वपुत्रकर्तृके दत्तकसपिण्डीकरणे देवतात्वबोधनाय स्वकीयत्वविशेषणोपादानं। ततश्च प्रतिग्रहीतृपितृणां मध्ये त्रयाणां षण्णां वा दत्तकसपिण्डीकरणे देवतात्वप्राप्तौ विशेषमाह द्वाभ्यामिति। त्रिषु पितृषु द्वाभ्यां षट्सु चतुर्भिः। एवं दत्तकपौत्राः स्वपितृसपिण्डीकरणं स्वपितामहप्रतिग्रहीतुः त्रयाणां पितॄणां मध्ये एकेन प्रतिग्रहीतुः पित्रा द्व्यामुष्यायणत्वे द्वाभ्यां पितामहप्रपितामहाभ्याञ्च सह कुर्य्युः। अमुमेव न्यायं दत्तकतत्पुत्रयोरप्यतिदिशति तत् सममिति। तत् सपिण्डीकरणं दत्तकतत्-

न जनकस्य पित्रादीनां स्वकीयत्वविशेषणेन तद्व्यावर्त्तनात्। ततश्चेति।—दत्तककर्तृकसपिण्डीकरणे प्रतिग्रहीतुः पित्रादीनां त्रयाणां देवतात्वाच्च। प्रतिग्रहीतृपितॄणामिति।—दत्तकस्य प्रतिग्रहीतुः पितॄणामित्यर्थः। त्रयाणां षोरसत्वे शुद्धदत्तकत्वे च त्रयाणां षण्णां द्व्यामुष्यायणत्वे षण्णामित्यर्थः। दत्तकसपिण्डीकरण इति।—दत्तकस्य पितुः सपिण्डीकरणे तत्पुत्रकर्तृक इत्यर्थः। द्वाभ्यामितीति।—दत्तकस्य प्रतिग्रहीतुः पितृपितामहाभ्यां द्वाभ्यामित्यर्थः। तथाच दत्तकपुत्रकर्तृकदत्तकसपिण्डीकरणं दत्तकप्रतिग्रहीतुः पितृपितामहाभ्यां द्वाभ्यां प्रतिग्रहीत्रा च एवं त्रिभिर्योजयेत्। चतुर्भिरिति।—दत्तकस्य प्रतिग्रहीतुः पितृपितामहाभ्यां जनकस्य पितृपितामहाभ्यां एवञ्चतुर्भिरित्यर्थः। तथा च दत्तकसपिण्डनं तत्पुत्रः प्रतिग्रहीतुः पितृपितामहाभ्यां जनकस्य पितृपितामहाभ्यां प्रतिग्रहीत्रा जनकेन च एवं षड्भिर्योजयेत्। दत्तकपौत्रा इति।—स्वपितुः सपिण्डीकरणे दत्तकस्य प-

पुत्रयोरपि द्व्यामुष्यायणत्वे समं पितृवर्गद्वयेन कार्य्यं। नन्वेवं दत्तकपुत्रपौत्रेण स्वपितुः दत्तकपौत्रस्य सपिण्डीकरणे दत्तक-पुत्रदत्तकतत्प्रतिग्रहीतृभिः त्रिभिः सह क्रियमाणे प्रतिग्रही-तृपितॄणां त्रयाणामन्यतमस्याप्यनुप्रवेशाभावेन सापिण्ड्यं न स्यादि-

---

पितामहतत्प्रतिग्रहीतृभ्यां । 'ग्रहीतुः' दत्तकरूपपितामह ग्रहीतुः पितॄणां मध्ये एकेन दत्तकरूपपितामहस्य पितामहेन, एवञ्च दत्तकपौत्रैर्दत्तक-पुत्ररूपस्य स्वपितुः सपिण्डीकरणे कर्त्तव्ये दत्तकतत्पितृपितामहानां देव-तात्वमित्यर्थः। द्व्यामुष्यायणत्वे तु प्रतिग्रहीतुः पित्रा जनकेन च एवं मिलिताभ्यां ताभ्यां सपिण्डनकर्त्तुर्दत्तकरूपपितामहतत्प्रतिग्रहीतृरूप-पितामहाभ्याञ्च योजनं। ननु प्रतिग्रहीतुरौरसत्वे शुद्धदत्तकत्वे द्व्यामु-ष्यायणत्वे वा ये पितृवर्गास्त्रयः षड्वा दत्तककर्त्तृके सपिण्डीकरणे तेषां देवतात्वमुक्तं युक्तमेव दत्तकपुत्रपौत्रकर्त्तृके स्वस्वपितृसपि-ण्डीकरणे प्रतिग्रहीतुर्द्व्यामुष्यायणत्वनिबन्धनपितृवर्गद्वयस्य कथं देव-तात्वं तयोः पितुर्द्व्यामुष्यायणत्वाभावादित्यत आह अमुमेवेति। तथा च वाचनिकमेव तद्देवतात्वमिति भावः। दत्तकतत्पुत्रपौत्रयोरिति। एतेनेदमुक्तं भवति अस्य वचनस्य दत्तकप्रकरणीयत्वेन दत्तकविषयकत्वात् दत्तकेन सपिण्डीकरणे कर्त्तव्ये तद्ग्रहीतुः पार्वणोद्देश्यानां त्रयाणां देवतात्वप्रदर्शनेन दत्तकपुत्रपौत्राभ्यां स्वस्वपितुः सपिण्डीकरणे पार्व-णोद्देश्यानां त्रयाणां देवतात्वप्रदर्शनेन च दत्तकस्यापि पार्वणे त्रयाणां पार्वणोद्देश्यत्वं प्रतिपादितं तत्प्रतिपत्त्या दत्तकस्य त्रैपुरुषिकं सापिण्ड्यं पिण्डान्वयरूपं दर्शितं दत्तकलेपिनां सापिण्ड्यनिरासश्च दर्शितः तथा च दत्तकपुत्रपौत्रयोः दत्तकस्य पितुः पार्वणे तत्पितॄणां त्रयाणां देवतात्वं पुत्रपौत्रदत्तककर्त्तृकपितृसपिण्डने सपिण्डनयोग्यपित्रादीनां देवतात्व-

त्यत आह चतुर्थपुरुषे छेद इति। यो यदा स्वपितुः सपिण्डीकरणं करोति स तत्पित्रादिभिस्त्रिभिरेव कुर्य्यात् न चतुर्थेनेत्यर्थः। नन्वेवमौरसस्थलेऽपि सपिण्डीकरणं त्रिभिरेव शास्त्रे सिद्धं तेनैव सिद्धौ वचनान्तरारम्भक्लेशः किमर्थं इत्यत आह तस्मादिति। दत्तकानामेषा पिण्डान्वयरूपा अशौचाविवाह्यत्वादिप्रयोजिका त्रिपुरुष्येव सपिण्डता न लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः। पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषमिति मात्स्याभिहिता साप्तपौरुषी तस्याः सामान्यरूपतया विशेषेणापवादात्।

एतदेवाभिप्रेत्योक्तं संग्रहकारेण। दत्तकानान्तु पुत्राणां सापिण्ड्यं स्यात् त्रिपौरुषं। जनकस्य कुले तद्वद्गृहीतुरितिधारणेति। यदित्तुभयत्र त्रिपुरुषसापिण्ड्याभिधानं तत् द्व्यामुष्यायणाभिप्रायेण तस्य त्रिकद्वयेन सह सपिण्डीकरणाभिधानात्

---

स्यान्नूच केवलं दत्तकस्य पार्वणे त्रयाणां देवतात्वं, लेपिनां लेपनिरासश्च विधीयते तदनुसारेण दत्तकस्य सापिण्ड्यं त्रैपुरुषिकं व्यपालिछिपत् इति तात्पर्य्यं। तथा च दत्तकपितृपितामहप्रपितामहाना सापिण्ड्यं अशौचाविवाह्यत्वप्रतिपादकमिति फलितं। चतुर्थपुरुषे च्छेद इति।—अनेन दत्तकस्योक्ते लेपिनां पितामहस्य पितामहादीनां त्रयाणां सापिण्ड्यं नास्तीति प्रतिपादितं। तस्मादिति।—तथा च त्रैपुरुषिकसापिण्ड्यविधानार्थं वचनारम्भ इति भावः। विशेषेणेति।—तस्मादेषा त्रिपौरुषीति विशेषेणेत्यर्थः।

दत्तकानान्त्विति।—तथा च कारिकेयं न तु मुनिवचनमित्यर्थः। तद्वदिति।—पञ्चमी सप्तमी तद्वदिति मनुवचने इति शेषः। तदि-

शुद्धदत्तकस्य तु प्रतिग्रहीतृकुले त्रिपुरुषं पिण्डान्वयरूपं सापिण्ड्यं जनककुले साप्तपौरुषमवयवान्वयरूपमेवेति। अलं प्रपञ्चेन। तद्गोत्रमिति। 'तद्वत्' सपिण्डतावत्, गोत्रमपि वीजवप्तुः जनकस्य न केवलं जनकस्य अपि तु तत्पालकस्य च दत्तकादेर्यः पालकस्तस्य च गोत्रं दत्तकादीनां भवतीति। अनेन सपिण्डतावैलक्षण्यं गोत्रेऽभिहितं यथा सपिण्डता जनकस्यैव न तथा गोत्रं किन्तु उभयोरपितदिति। न चेदमपि दत्तकमात्रे किन्तु द्व्यामुष्यायणे दत्तकविशेषे। तथाहि द्विविधा दत्तकादयो। नित्यवत् द्व्यामुष्यायणा अनित्यवत् द्व्यामुष्यायणाश्चेति। तत्र नित्यद्व्यामुष्यायणा नाम ये जनकप्रतिग्रहीतृभ्यामावयोरयं पुत्त्र इति संप्रतिपन्नाः, अनित्यवद्व्यामुष्यायणास्तु ये चूडान्तैःसंस्कारै र्जनकेन संस्कृताः उपनयनादिभिश्च प्रतिग्रहीत्रा तेषां गोत्रद्वयेनापि संस्कृतत्वात् 'द्व्यामुष्यायणत्वं' परन्त्वनित्यं जातमात्रस्यैव परिग्रहे गोत्रद्वयेन संस्काराभावात् तस्य प्रतिग्रहीतृगोत्रमेव।

तदिदं सर्वमभिप्रेत्याह सत्याषाढ़ः। नित्यानां द्व्यामुष्यायणानां

---

तीति।—गोत्रमित्यर्थः। द्व्यामुष्यायणे दत्तकविशेषे इति।—द्व्यामुष्यायणं विवृणोति तथाहीति।—संस्कृतत्वादिति।—पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते। आचूड़ान्तं न पुत्रः स पुत्रतां याति चान्यत इति कालिकापुराणोक्तवचनात्।

नित्यानां द्व्यामुष्यायणानां द्वयोरिति सूत्रमेकं दत्तकादीनां द्व्यामुष्यायणवदिति सूत्रान्तरं तस्यैव। दत्तकेति।—दत्तकादीनां द्व्यामु-

द्वयोरिति सूत्रेण नित्यद्व्यामुष्यायणानां गोत्रद्वयप्रवरसम्बन्धमुक्त्वा तमेवानित्येष्वप्यतिदिशति दत्तकादीनान्तु द्व्यामुष्यायणवदिति सूत्रेण। व्याख्यातञ्चैतत् शबरस्वामिभिः। द्व्यामुष्यायणप्रसङ्गेनानित्यानाह दत्तकेति। तावदेव नोत्तरसन्ततौ प्रथमेनैव संस्काराः परिग्रहीत्रा चेत्तदा उत्तरस्य पूर्ववात्तेनैव उत्तरत्र। तथा पितृव्येण भ्रातृव्येण चैकापिण्ड्ये जातास्ते परिग्रहीतुरेवेति। अस्य भाष्यस्यायमर्थः। यो गोत्रद्वयेन संस्कृतस्तस्यैव गोत्रद्वयसम्बन्धो नोत्तरसन्ततिः। जनकगोत्रसम्बन्धे किं कारणमित्यत आह प्रथमेनेति। प्रथमो जनकस्तेनैव संस्कृतत्वात् संस्काराश्च चौड़ान्ताः। पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते। आचूड़ान्तं न पुत्रः स पुत्रतां याति चान्यत इति कालिकापुराणात्। व्याख्यातञ्चैतत् प्रागेव अन्यस्यासाधारणीं पुत्रतां न याति किन्तु द्व्यामुष्यायणो भवतीति। प्रथमेनासंस्कारे कथमित्यत आह परिग्रही-

---

ष्यायणवदिति।—तावदेवेत्यादि उत्तरत्रेति पर्य्यन्तं एकः शबरस्वामिभाष्यपाठः अपरस्तु पितृव्येणेत्यादि परिग्रहीतुरेवेत्यन्तः। भाष्यस्यार्थं स्वयमेव व्याकरोति अस्य भाष्यस्यायमर्थ इति। यो गोत्रद्वयेन संस्कृतस्तस्यैव गोत्रद्वयसम्बन्धः नोत्तरसन्ततेः, प्रतिग्रहीत्रा निखिलसंस्कारैश्चूड़ादिसंस्कारैर्वा संस्कृतसन्ततेर्न गोत्रद्वयसम्बन्ध इत्यर्थः तावदेव नोत्तरसन्ततेरित्यन्तभाष्यस्यार्थः। ननु प्रतिग्रहीत्रा जनकाद्गृहीत्वा स्वगोत्रेण संस्कृतस्य ग्रहीतुरसाधारण्येन पुत्रत्वं युज्यते न जनकस्यापि दानेन तत्स्वत्वनाशात् इत्यत आह जनकगोत्रसम्बन्ध इति। एवकारोऽप्यर्थः तेनैव संस्कृतत्वादिति प्रथमेनैवेत्यस्य व्याख्या। संस्कारा इत्यस्य व्याख्या चौड़ान्ता इति। प्रथमेनासंस्कारे कथमित्यादि परिग्रहीतुरेव गोत्र

त्वा चेदिति। परिग्रहीत्रैव जातकर्मादिसर्व्वसंस्कारकरणे चौड़ादिसंस्कारकरणेऽपि वा उत्तरस्य परिग्रहीतुरेव गोत्रम् तत्र हेतुः पूर्व्वत्वात्संस्कारकरणे प्रथमत्वात्। द्व्यामुष्यायणसन्ततौ दत्तकसन्ततौ चापेचितं गोत्रमाह .तेनैवेति। परिग्रहीतृगोत्रेणैव उत्तरसन्ततेर्गोत्रमुभयत्रापि। सगोत्रपरिग्रहमाह तथेति। जनकपरिग्रहीत्रोरेकगोत्रत्वेऽपि परिग्रहीत्रैव व्यपदेशः परिग्रहसंस्कारकरणादिति। यत्तु गोत्ररिक्थे जनयितुर्न्नभजेद्दत्रिमः सुत इति तत् परिग्रहीत्रैव जातकर्मादिसर्वसंस्कारकरणपक्षे वेदितव्यम्। ये तु नित्यवद्द्व्यामुष्यायणा दत्तकादयस्तेषां गोत्रद्वयं। द्व्यामुष्यायणका ये स्युर्द्दत्तकक्रीतकादयः। गोत्रद्वयेऽप्यनुद्वाहः शुङ्गशैशिरयोर्यथेति पारिजातस्मरणात्। गोत्रद्वये जनकगोत्रे परिग्रहीतृगोत्रे च दत्तकादीनाञ्च द्व्यामुष्यायणत्वे इदं वचनं नित्यानां द्व्यामुष्यायणानामिति मत्स्यापाढ़वचनं च प्रमाणं। प्रवरमञ्जर्य्यामप्यनेनैवाभिप्रायेणोक्तं दत्तक्रीतकृत्रिमपुत्त्रिकापुत्त्रा-

---

प्रथमत्वादिति परिग्रहीत्रा चेदित्यादि पूर्व्वत्वादित्यन्तस्यार्थः। द्व्यामुष्यायणसन्ततावित्ति तेनैवेति अस्य व्याख्या।—प्रतिग्रहीतृगोत्रेणैवेति।—उत्तरसन्ततेर्गोत्रं प्रतिग्रहीतृसन्ततेर्गोत्रं उभयत्रापि द्व्यामुष्यायणसन्ततौ दत्तकसन्ततौ च व्यवहार्थमिति भावः। उत्तरसन्ततेर्गोत्रमुभयत्रापीति उत्तरस्येत्यस्य व्याख्या। तथेति।—तथा पितुर्थैवेत्यादिग्रन्थान्तरं। सगोत्रपरिग्रहमाहेति।—ननु सगोत्रपरिग्रहे परिग्रहीतुर्गोत्रसम्बन्धेऽपि अपरित्याज्यत्वेन जनकगोत्रसम्बन्धोऽस्त्येव स च परिग्रहीतुरेवेति कथं परिग्रहीतृगोत्रव्यपदेशः। उच्यते तस्यापि गोत्रव्यपदे-

विवाहादौ देवरपुत्रस्य न परिवित्तिपरिवेत्तृत्वादिदोषो देवरपुत्रविवाहादौ वा क्षेत्रजशेत्येतदर्थं न यथाश्रुतपितृव्यपुत्राभिप्रायं परिगृहीतस्य दत्तपदेनैवोपादानात् अपरिगृहीतस्य च प्रसक्त्यभावेन निषेधाप्रवृत्त्या प्रतिप्रसवासम्भवात्। न चैतस्मादेव ज्ञापकादपरिगृहीतस्यापि भ्रातृपुत्रस्य पुत्रत्वमिति शङ्कनीयम्। दशानां भ्रातॄणां मध्ये पञ्चानामपुत्रत्वे पञ्चानाञ्च प्रत्येकं दशपुत्रत्वे भ्रातॄणां प्रत्येक पञ्चाशत्पुत्रतापत्तेः, पञ्चाशतश्च भ्रातृपुत्राणां प्रत्येकं दशपितृकतापत्तेश्चेत्याद्युक्तदूषणगणग्रासात् तस्मात् यथाव्याहृतमेव साधु।

एवं प्रतिग्रहीतृकुलश्राद्धीयद्रव्य दत्तकाय प्रतिग्रहीतृ-जनककुलश्राद्धीयद्रव्यञ्च द्व्यामुष्यायणाय न दातव्यं सपिण्डाय सगोत्राय श्राद्धीयं नव दापयेत्। न भोजयेत् पितृश्राद्धे समानप्रवरं तथेति हेमाद्रिपारिजातधृतवचनात्। 'श्राद्धीयं' श्राद्धे दत्तद्रव्यं।

औरसपत्नवेन औरसपुत्त्या अपचारे क्षेत्रजाद्याः पुत्त्राः प्रतिनिधयो भवन्ति। मुख्यापचारे प्रतिनिधिरिति न्यायात्। मुख्यत्वञ्चास्या दानादिविधौ साधनत्वेन साधनत्वञ्च ऋतुगमनविधिना

---

परिवेदनीया कन्या परिदायी दाता परिकर्त्ता याजकः ते सर्वे पतिता इति शातातपवचनात्। एतस्मादिति। पितृव्यतनयेऽपिवेत्यादिवचनात्।

औरसपुत्रत्वेनेति।—मुख्यत्वं चास्या इति। याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेत् इत्यादिविधिना अर्जितस्य भोक्ष्यादेः क्रतुसाधनत्ववत् ऋतुगमनेन अपत्यमुत्पादयेदित्यादिविधिनोत्पन्नस्यापत्यस्य

साधितायाः द्रव्यार्ज्जनविधिनः अर्ज्जितस्य ब्रीह्यादेः क्रतुसाधनत्ववत्। तथाहि रात्रिसत्रन्यायेन ऋत्वियात् प्रजां विन्दामहे ऋत्वियात् प्रजां विन्दते इत्याद्यर्थवादोन्नीते ऋतावुपेयात् तस्मिन् संविशेदित्यादौ नित्ये ऋतुगमनविधौ स्त्रीपुंससाधारण्याः श्रुतिसिद्धायाः प्रजाया एव भाव्यत्वमवगम्यते। प्रजनयतीति प्रजेतिव्युत्पत्त्या ,प्रजननशक्तिमतः स्त्रीपुंसएव प्रजाशब्दवाच्यत्वात् न

---

कन्यापुत्त्रसाधारणस्य कन्यां दद्यात् पिता स्वयं इत्यादिविधेः साध्यत्वादिति भावः। रात्रिसत्रन्यायेनेति।—स च न्यायश्चतुर्थाध्यायेऽनुसन्धेय इति प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्तीति श्रूयते तत्र रात्रिशब्देन चतुर्थ चायुरर्थेय ज्योतिरित्यादिवाक्यविहितास्तत्रात्मका सोमयागविशेषा उच्यन्ते। अत्र संशयः किमत्र स्वर्ग एव विधिशक्तिलभ्योऽधिकारिविशेषणं उत प्रतिष्ठा अर्थवादोन्नीता इति।—अत्र सिद्धान्तः प्रतिष्ठा एवाधिकारिविशेषणं तस्या एवार्थवादोन्नीतत्वेनोपस्थितत्वात्, सन्निहिते बुद्धिरन्तरङ्गेति न्यायवशात् यत्र कामनाविशेषो विधौ अर्थवादे वा न श्रूयतएव विधिशक्त्या सामान्यस्वर्ग एवाधिकारिविशेषणं प्रत्यवसीयते। यथा रात्रिसत्रन्याये श्रुतायाः प्रतिष्ठाया अधिकारिविशेषणत्वं पर्य्यवसितं, तथा ऋत्वियात् प्रजां विन्दते इत्यत्र श्रुतायाः प्रजाया एवाधिकारिविशेषणत्वं सिद्धमिति। ऋत्वियात् प्रजां विन्दामहे इत्येका श्रुतिः। ऋत्वियात् प्रजां विन्दते इति श्रुत्यन्तरं। ऋतावुपेयादित्येका तस्मिन् संविशेदित्यपरा। प्रजाया एवेति, प्रजाशब्देति।—प्रजा स्यात् सन्ततौ जने इति कोषात्। जनयन्ती प्रथमांशा इत्यनेन जनन्या अपि जननशक्तिमत्त्वावगमात् अन्यथा जनयित्रीति योगविरोधात्। शुक्राधिक्येति।—पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः। समेऽपुमान्स्त्रियावित्यादिमनुवचनादिति भावः।

नपुंसकस्य तस्य शुक्रशोणितसाम्यजन्यत्वेन नान्तरीयकत्वात्। अतएव अनधीत्य द्विजो वेदमनुत्पाद्य च सन्ततिम्। अनिष्ट्वा विविधैर्यज्ञैर्मोक्षमिच्छन् पतत्यध इति तादृश्या एव सन्ततेरनुत्पादे अधःपातः स्मर्य्यते। संततोत्पन्नत्वमिति सन्ततिः प्रजापर्य्याय एव। प्रजा स्यात् सन्ततौ जने इतिकोषात्। एवं "अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं वीजिनो नराः। क्षेत्रवीजवते देयं नावीजी क्षेत्रमर्हति" इत्यत्र अपत्यशब्दो व्याख्यातः अपत्यं कस्मादपततं भवति नानेन पततीति वेति यास्कस्मरणात्। आत्मजस्तनयः सूनुः सुतः पुत्त्रः स्त्रियस्त्वमी। आहुर्दुहितरं सर्व्वेऽपत्यं तोकं तयोः समे इति कोषाच्च। यद्यत्र पुमान् पुंसुमना भवति पुंसतेर्व्वेति यास्कोक्त्या पुपदं वंशपरं तदा पुंसतेर्व्वेति तदुक्त्यैव प्रसवकर्त्तृ मिथुनपरमेव व्याख्यायताम्।

अतएव यास्कः। मिथुनाः पितृप्रदायादा इति। तदेतादृक्-

---

सथाच शुक्रशोणितसाम्यजन्यस्य जननशक्तिमत्त्वाभावात् इति भावः। पुमान् पुंस इति वचनात् स्त्रीपुंसयोः शुक्राधिक्यजन्ययोः कन्यापुत्रयोर्जननशक्तिमत्त्वावगमात्। नान्तरीयकत्वात्।—स्त्रीपुंसाभ्यां विभिन्नकत्वादित्यर्थः। सन्ततेरिति।—कन्यापुत्रवाचकाया इत्यर्थः। कस्मादिति।—कस्मात् लोकादित्यर्थः। कस्मादपततं भवतीत्यर्थः नानेन पततीत्यपरः, तथाच न पतत्यस्मात् न पतत्यनेन वा इत्यपादाने कर्त्तरि वा यप्रत्ययसिद्धमपत्यपदमिति भावः। इति कोषादिति।—स्त्रीपुंसाधारणस्य वाचकं अपत्यपदमित्यर्थः। यद्यत्रेति, तदेति, मिथुनपरमिति।—स्त्रीपुंससाधारणपरमित्यर्थः।

मिथुनाः पितृप्रदायादा इति।—तदेतादृगिति वक्ष्यमाणाभ्यामिति

लोकाभ्यामपुत्रकम्। अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे आत्मा वै पुत्रनामासि स जीव शरदः शतमिति। अविशेषेण पुत्राणां दायो भवति धर्मतः। मिथुनानां विसर्गादौ मनुः स्वायम्भुवोऽब्रवी-दित्यत्र पुत्रपदं मिथुनपरं दर्शितवान्। न चात्र मिथुनपदं पुत्र-स्नुषापरमिति वाच्यम्। अङ्गादङ्गात् सम्भवसि इत्यसङ्गतेः। न दुहितर इत्येके पुमान् दायादोऽदायादा स्त्रीति विज्ञायत इत्ये-कीयमते दुहितृनिराकरणासङ्गतेश्च। यच्च नापुत्रस्य लोकोऽस्ती-त्यादौ पुत्रपदं तदप्युभयपरमेव। भ्रातृपुत्रौ स्वसृदुहितृभ्यामिति पाणिनिना पुत्रदुहितृपदयोरेकशेषस्मरणात्। एतेन अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदेत्यादावपि पुत्रपदं व्याख्यातं तत्सा-धनञ्च पुत्रिकाकरणलिङ्गमग्रे वक्ष्यते। अतएवोक्तं तत्समः पुत्रिकासुत इति, अङ्गादङ्गात्सम्भवति पुत्रवद्दुहिता नृणामिति च। यदि च अदृष्टवैकल्येन कन्यानुत्पादः तदा कृष्णप्रतिपच्छ्रा-द्धादिना तत्सम्पादनं कार्य्यं, कृष्णचतुर्थीश्राद्धादिना पुत्राद्युत्पत्तिवत्। यत्तु गमनकरणिकायामेव भावनायां एवं गच्छन् पुत्रं जनयेदिति

शेषः। नायाह अङ्गादित्यादि। अविशेषेण तुल्यतया इत्यर्थः। पुत्राणां मिथुनानामित्यन्वयः। 'विसर्गादौ' दायविभागादौ इत्यर्थः। इत्यसङ्ग-तेरिति।—स्नुषाया अङ्गजत्वाभावादित्यभिप्रायः। पुत्रपदं व्याख्यात-मिति।—कृष्णप्रतिपच्छ्राद्धेति।—प्रतिपदि कन्यां मघां द्वितीयायां सर्व्वकामस्तृतीयायां पशूंश्चतुर्थ्यां क्षुद्रपशूनित्यादि देवलादिवचनात्। कुर्व्वन् प्रतिपदि श्राद्धं सुरूपां लभते सुतामिति पैठीनसिवा-धिन्तामण्यादिधृतवचनादिति शेषः। कृष्णचतुर्थीश्राद्धेति।—कृष्ण-

पुत्रस्यैव भाव्यत्वं प्रतीयते तत्प्रजापदोपात्तयोः स्त्रीपुंसयोर्मध्ये पुत्रस्य तद्वाक्यविहितगुणफलतया अवश्यत्वानुवादः पुत्रार्थिमन्त्रत्वर्यः गुणाश्च युग्मनिशाद्ग्राधिक्यस्त्रीचामतेन्दुसौकथ्यपुंसवनापूर्वादयो योगिमन्वादिभिरेव एवमित्यादिना स्पष्टीकृताः। आश्वलायनेनापि पाणिग्रहणे एतत्पुत्रयोर्गुणफलत्वं प्रकटितं। गृह्णामि ते सौभगत्वाय हस्तमित्यङ्गुष्ठमेव गृह्णीयात्, यदि कामयेत पुमांस एव मे पुत्रा जायेरन्नित्यङ्गुलीरेव स्त्रीकामोरोमान्ति हस्तं साङ्गुष्ठमुभयकाम इति। एतेन स्त्रियोऽयुग्मासु रात्रिष्वित्यपि व्याख्यातम्। तस्मात् पुत्रस्यैव श्राद्धकर्तृत्वेन परलोकसाधनतया पुत्रा अपि दानश्राद्धादिविधिसाधनत्वेन सिद्धे मुख्यत्वे तदपचारे प्रतिनिधिर्युक्त एव। दुहिता दुरहिता दूरे हिता

---

वर्षसिनं चतुर्थे चुम्पशु पञ्चमे इत्यादितद्गृहवचनादितिशेषः। 'इन्दुसौकथ्यं' चन्द्रशुद्धिः। अन्यथा पञ्चलकन्यासत्त्वे पुत्रीकरणं न स्यादिति। तथाच औरसपुत्रस्य पुत्रिकाकरणवत् दत्तकादिपुत्रीणामपि पुत्रिकाकरणं सिद्धमिति। एतेनेदमुक्तं यत् कन्यासत्त्वे दौहित्रकृतलोकप्राप्तावपि पुत्रकृतलोकादिप्राप्त्यर्थं पुत्रप्रतिनिधेरावश्यकत्वं, पुत्रसत्त्वे ततकृतलोकसिद्धावपि दौहित्रकृतलोकावाप्त्यर्थं दुहितुरवश्यम्भावः, सुतरां औरसपुत्राभावे दत्तकादुहित्र्यां प्रतिनिधित्वं युक्तमिति। एवमित्यादिनेति। एवं गच्छन् पुत्रं जनयेदिति, इत्यादिना तस्मादयुग्मासु पुत्रार्थी संविशेदार्तवे स्त्रियमिति मनुवचनपरिग्रहः। तस्मादिति।—दुर्हिता इत्यस्य विवरणं दूरे हिता दोग्ध्री इति। दोग्ध्री दोहनकर्त्री उपकर्त्री भविष्यतीत्यर्थः।

दोग्धा वेति निरुक्त्या दुहितुर्दौहित्रद्वारापि पितृुपकारकत्वं दर्शयति यास्कः।

मनुरपि। पौत्रदौहित्रयोर्लोके विशेषो नोपपद्यते। दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्रवदिति। महाभारते गान्धार्य्युक्तिश्च। एका शताधिका बाला भविष्यति गरीयसी। तेन दौहित्रजांल्लोकान् प्राप्नुयामिति मे मतिः। अन्यत्रापि दुहितर एव मातापित्रोः किमौरसाः पुत्राः। निपतन् दिवो ययातिर्दौहित्रैरुद्धृतः पूर्वमिति। दौहित्रैरष्टकादिभिः कानीनैर्माग-धीपुत्रैः। एवञ्चौरसदुहित्रभावे दौहित्रकृतलोकप्राप्त्यर्थं चैत्र-आदिदुहितृणामपि प्रतिनिधित्वेनोपादानं सिद्धमेव। नच दौहित्र-प्रतिनिधित्व इव वचनमस्ति। यद्येवं तर्हि भर्त्रपचारे देवरस्येव भार्य्यापचारे श्यालिकायाः प्रतिनिधित्वं स्यात् श्वशुरशरीरावयवान्वयेन सौसादृश्यादिति चेन्नैवम्। नहि श्वशुरशरीरावयवान्वयेन

---

दोहनशब्देन इह उपकार उच्यते, दुहितुः प्रकृतदोहनस्यासम्भवात् दौहित्रद्वारा हितकारित्वं तस्याः न तु स्वत इति भावः।

तत्र मनुवचनं प्रमाणयति मनुरपीति। एकेति।—शतादधिका एका बाला इत्यर्थः, शतं पुत्रा एका कन्येति यावत्। दुहितर एवेति।—यद्यपि दुहितरः सन्ति तदा औरसाः पुत्राः किं कुर्वन्तीति भावः। एतत्तु दुहितुः प्रशंसामात्रपरं नत्वौरसाभावमात्रपरमपि तेषां श्राद्धाधिकारसम्भवत्वेन तत्र पितृदातृत्वेन च दुहितृभ्योऽभ्यर्हितत्वादिति। 'निपतन्' अधःपतन्नित्यर्थः। कानीनैरिति।—कानीनै-र्मागधीपुत्रैरिति दौहित्रैरित्यस्य विशेषणम्। अष्टकादिभिः यज्ञै-

भार्य्योपादानं किन्तु तस्याः संस्कृतस्त्रीत्वेन नच तत् श्यालिकायामस्ति यत्र च कनिष्ठादौ तदस्ति तत्र भवत्येव तस्याः ज्येष्ठाप्रतिनिधित्वम्। यथाह व्यतिरेकमुखेन योगीश्वरः। सत्यामन्यां सवर्णायां धर्मकार्य्यं न कारयेत्। सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरेति। तस्मात् सिद्धमासां न्यायत एव प्रतिनिधित्वम्।

तत्र चैत्रजगूढ़जकानीनसहोढ़पौनर्भवानां पञ्चानां मध्ये चैत्रजोत्पादनं मनुरेवाह। देवराद्वा सपिण्डाद्वा स्त्रिया सम्यक् नियुक्तया। प्रजेप्सिताधिगन्तव्या सन्तानस्य परिचय इत्यनेन सन्तानस्योभयविधस्य परिचये उभयविधायाः प्रजाया इष्टत्वेन यथायथं प्रतिनिधित्वमित्यर्थः। इतरासु चतसृषु नोत्पादनविध्यपेक्षा लोकस्वभावसिद्धत्वात् तासाञ्च नामानि पुत्त्रवत्

---

रित्युद्धारस्य हेतुः। तस्या इति।—संस्कृतस्त्रीत्वेन श्यालिकायां ततसंस्कृतत्वाभावेनासैासादृश्यादित्यर्थः। कनिष्ठादाविति।—भार्य्यायामिति शेषः। तदस्ति।—तत् संस्कृतत्वमित्यर्थः। व्यतिरेकमुखेनेति।—सवर्णासु ज्येष्ठाया धर्मकार्य्यं कारयेत्, अनेन ज्येष्ठाया अभावे कनिष्ठया कारयेदिति व्यतिरेकमुखेनेत्यर्थः।

देवराद्वेति।—ईप्सिता प्रजा अधिगन्तव्या इत्यन्वयः। 'सन्तानस्य परिचये' अपुत्त्रत्वे इत्यर्थः। 'उभयस्याः' कन्यापुत्त्ररूपाया इत्यर्थः। इतरासु प्रजासु इत्यर्थः। लोकस्वभावसिद्धत्वादिति।—तथा च पुत्त्रविशेषजत्वनिश्चयाभावेऽसवर्णजत्वनिश्चयेन कानीनादीनां लोके प्रसिद्धेः। पुत्त्रवत् तान्येव।—चैत्रजादीन्येव नतु स्त्रीत्वेन तासां नामान्तरमिति भावः। प्रवृत्तिनिमित्तस्य शक्यतावच्छेदकस्य क्षेत्रजातत्वस्य पुत्त्रकन्योभयसाधारण्यादित्यर्थः। औरसेति।—औरस-

तान्येव प्रवृत्तिनिमित्तस्योभयत्रापि तुल्यत्वात् तासां चौरसप्रतिनिधित्वं विकलावयवारब्धत्वेन न्यायत एव सिद्धं व्रीह्यपचारे नीवाराणामिव अवयववैकल्यस्य स्वावयवमात्रान्वयेन सर्व्वावयवान्वयाभावात्। अस्त्वेवं क्षेत्रजादीनां दुहितॄणां औरसदुहितृप्रतिनिधित्वं न्यायबलात् दत्तकक्रीतकृत्रिमदत्तात्मापविद्धानां सौसादृश्यन्यायाभावे कथमस्तु प्रतिनिधित्वम्। नैवम्। तत्रापि सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिरिति योगिप्रतिपादितसजातीयत्वादिसौसादृश्यसद्भावात् अस्त्येव न्यायप्रसरः उपपादितं चैतदधस्तात् पुत्त्रप्रतिनिधिविचारे। ननु क्षेत्रजादीनां पञ्चानां मात्रवयवान्वयेन दत्तकादीनां पञ्चानां सजातीयत्वेनास्तु प्रतिनिधित्वं पूर्व्वाभावे परः पर इति क्रमविधानन्तु कथं सादृश्याविशेषादिति चेन्नैवम्। पूर्व्वपूर्व्वश्रेयस्त्वेनेति ब्रूमः। तदाह विष्णुः। एतेषां पूर्व्वः पूर्व्वः श्रेयानिति। श्रेयो दृष्टादृष्टविशेषः दृष्टं अव-

---

दुहितृप्रतिनिधित्वमित्यर्थः। 'विकलावयवारब्धत्वेन' मात्रवयवमात्रजन्यत्वेन। न्यायत एवेति।—सौसादृश्यन्यायात् न्यायत एवेत्यर्थः। व्रीह्यपचार इति।—यथोक्तवस्त्वसंभवे याद्यं तदनुकारि यत्। यवानामिव गोधूमा व्रीहीणामिव शालय इति न्यायादितिशेष। "न्यायप्रसरः" न्यायावसर इत्यर्थः। अधस्तादिति।—यत्र च येषु दम्पत्योरन्यतरावयवसम्बन्धस्तेषां न्यायादेव प्रतिनिधित्वमित्यादिग्रन्थेनेत्यर्थः। क्षेत्रजकानीनसहोढजपौनर्भवेषु मातापित्रन्यतरावयवप्रत्यासत्तिरस्त्येव तेषु अभिचारजातत्वेन शुद्धिगुणयोगाभावात् दत्तकादिषु तु शुद्ध्यादिः शुद्धबीजजातत्वात्। ननु क्षेत्रजादिषु सौसादृश्यादेव प्रतिनिधित्वे प्राप्ते किमर्थं वचनमित्याह वचनमस्त्विति।

यवप्रयासत्त्यादि अदृष्टं शुद्धद्रव्यादिवचनन्तु नियमार्थं यदि सोमं न विन्देत् पूतिकानभिषुणुयादित्यादिवत् विशेषान्तरं अस्मत्-कृतायां विष्णुस्मृतिटीकायां केशववैजयन्त्यामवधेयम्।

दुहितृप्रतिनिधौ पुराणेषु लिङ्गदर्शनानि उपलभ्यन्ते। तत्र दत्तकाया रामायणे बालकाण्डे दशरथं प्रति सुमन्त्रस्य सनत्-कुमारोक्तभविष्यानुवादो लिङ्गम्। इक्ष्वाकूणां कुले जातो भविष्यति सुधार्म्मिकः। नाम्ना दशरथो वीरः श्रीमान् सत्य-पराक्रमः। सख्यं तस्याङ्गराजेन भविष्यति महात्मना। कन्या चास्य महाभागा शान्ता नाम भविष्यति। अपुत्त्रस्त्वङ्गराजो वै लोमपाद इति श्रुतः। स राजानं दशरथं प्रार्थयिष्यति भूमिपः। अनपत्योऽस्मि धर्म्मज्ञ कन्येयं मम दीयताम्। शान्ता शान्तेन मनसा पुत्त्रार्थे वरवर्णिनी। ततो राजा दशरथो मनसाभि-विचिन्त्य च। दास्यते तां तदा कन्यां शान्तामङ्गाधिपाय सः। प्रतिगृह्य तु तां कन्यां स राजा विगतज्वरः। नगरं यास्यति क्षिप्रं प्रहृष्टेनान्तरात्मना। कन्यां तामृष्यशृङ्गाय प्रदास्यति स वीर्य्यवानित्यादि।

---

नियमार्थमिति।—सिद्धे सत्यारम्भो नियमायेति न्यायादित्यर्थः। नियमफलन्तु यवशुद्धादौ दोषाद्युत्पन्नेषु अवयवसम्बन्धेन सोमादृष्टेऽपि न पुत्रत्वं भवतीति। यदि सोममिति।—पूतिकां अभिषुणुयात् गृह्णीयात्।

भविष्यानुवाद इति। भविष्यत्कथनमित्यर्थः। इक्ष्वाकूणामिति।— कन्या चास्येति।—अस्य दशरथस्येत्यर्थः। 'अङ्गराजः' अङ्गस्य देशस्य राजा स लोमपादः। 'शान्तेन' प्रीतियुक्तेन। विगतज्वरः विगत-

तत्रैव लोमपादं प्रति दशरथवाक्यम्। शान्ता तव सुता वीर सह भर्त्रा विशाम्पते। मदीयं नगरं यातु कार्यं हि महदुद्यतमिति।

तत्रैव ऋष्यशृङ्गं प्रति लोमपादवाक्यम्। अयं राजा दशरथः सखा मे दयितः सुहृत्। अपत्यार्थं ममानेन दत्तेयं वरवर्णिनी। याचमानस्य मे ब्रह्मन् शान्ता प्रियतरा मम। सोऽयं ते श्वशुरो धीर यथैवाहं तथा नृप इत्यादि। अत्र दीयतां दास्यते प्रतिगृह्य दत्ताशब्दैर्दानविधिः स्पष्ट एव। तथा पुत्त्र इत्युपक्रम्य पुत्त्रार्थं इत्युपसंहारात् औरसपुत्त्रीवत् दत्तपुत्त्र्यपि पुत्त्रप्रतिनिधिर्भवतीति गम्यते।

क्रीतायां हेमाद्रौ स्कन्दपुराणे। आत्मीकृत्य सुवर्णेन परकीयान्तु कन्यकाम्। धर्म्येण विधिना दातुमसगोत्रापि युज्यते॥

---

स्त्रीशः स लोमपादः। 'लोमपादं प्रति' अङ्गराजं प्रतीत्यर्थः। भर्त्रा ऋष्यशृङ्गेणेत्यर्थः। 'विशाम्पते' नृपते। मदीयं नगरं अयोध्याख्यम्। दयितः सुहृदिति पदद्वयोपादानेन सुहृत्तमत्वं सूचितम्। पुत्त्रप्रतिनिधिरिति।—पुत्त्रवत् प्रतिनिधिः पुत्त्रिकाकरणविधिना पुत्त्रप्रतिनिधिर्भवतीत्यर्थः। अन्यथा अकृतौरसदुहितृत्वे दशरथादि-ग्रहणं न स्यात्।

आत्मीकृत्येति। क्रयेण स्वीकृत्य। 'धर्म्येण विधिना' ब्राह्मादिना विधिनेत्यर्थः। दातुं, अन्यस्मै दातुं नेतुमथ क्रयेण स्वत्वात्। अन्यदत्त-

लैङ्गेऽपि। कन्यां लक्षणसम्पन्नां सर्व्वदोषविवर्जिताम्। मातापित्रोस्तु संवादं कृत्वा दत्त्वा धनं महत्। आत्मीकृत्य तु संस्थाप्य वस्त्रं दत्त्वा शुभं नवम्। भूषणैर्भूषयित्वा तु गन्धमाल्यैरथार्च्चयेत्। निमित्तानि समीक्ष्याथ गोत्रनक्षत्रकादिकम्। उभयोश्चित्तमालोक्य उभौ सम्पूज्य यत्नतः। दातव्या श्रोत्रियायैव ब्राह्मणाय तपस्विने। साक्षादधीतवेदाय विधिना ब्रह्मचारिणे इति। अत्र सुवर्णेनात्मीकृत्य धनं दत्त्वेत्यादिशब्दैः क्रयविधिः स्पष्ट एव।

कृत्रिमाया हरिवंशे शूरापत्यगणनायाम्। महिष्यां जज्ञिरे

---

म्पन्नामिति।—'अव्यङ्गत्वादिलक्षणयुक्तां' संसृष्टमैथुनत्वादिदोषहीनाम्। संवादं सम्मतिमित्यर्थः। कृत्वेत्यन्तर्भूतोण्यर्थः कारयित्वेत्यर्थः। संस्थाप्येति।—विधिनेतिशेषः। निमित्तानीति।—शुभसूचकानि अष्टपिण्डकरणादीनि मिताक्षरायामुक्तानि यथा आभ्यन्तराणि अष्टपिण्डान् कृत्वा इत्याद्याश्वलायनोक्तविधिना वेदितव्यानि। पूर्व्वस्यां रात्रौ गोष्ठवेदिकाकितवस्थानक्षेत्रदेवकुलचतुष्पथश्मशानेभ्यो मृत्तिकां गृहीत्वा पिण्डाष्टकं कर्त्तव्यं तत्रानुक्रमेण प्रथमे पिण्डे स्पृष्टे धान्यवती भवति, द्वितीये पशुमती, तृतीयेऽभिषेकपरा, चतुर्थे विवेकिनी, चतुरा स्वर्गजनार्च्चनपरा भवति, पञ्चमे रोगिणी, षष्ठे वन्ध्या, सप्तमे व्यभिचारिणी, अष्टमे विधवा भवेदित्याश्वलायनस्मरणादिति। 'उभयोश्चित्तमालोक्य' उभयानुरागं बुद्ध्वा। एतेन गान्धर्व्वविवाह उक्तो भवति। गान्धर्व्वः समयान्मिथ इति याज्ञवल्क्यीयात्। श्रोत्रियायेत्यनेनाधीतवेदत्वे सिद्धे यदधीतवेदायेति पुनःकथनं तदन्यस्याध्येतृत्वाध्ययनज्ञापनार्थमिति। 'ब्रह्मचारिणे' अकृतदारायेत्यर्थः।

शूराद्भोजायां पुत्रा दश। वसुदेवो महाबाहुः पूर्व्वमानकदुन्दुभिरित्युपक्रम्य देवभागस्ततो जज्ञे तथा देवश्रवाः पुनः। अनाधृष्टिः कनवको वत्सवानथ गृञ्जिमः। श्यामः शमीको गण्डूषः पञ्च चास्य वराङ्गणा इति मध्ये विधाय, पृथुकीर्त्तिः पृथा चैव श्रुतदेवा श्रुतश्रवाः। राजाधिदेवी च तथा पञ्चैता वीरमातर इति पद्यापि विगणय्य, पृथां दुहितरं चक्रे कुन्तिस्तां पाण्डुरावहत्। यस्यां स धर्म्मविद्राजा धर्म्मात् यज्ञे युधिष्ठिर इत्यादि। अत्र चक इति कर्त्तुरेव व्यापारश्रवणादस्याः कृत्रिमत्वम्।

पाद्मे भौमखण्डे च। आसीत् सुनन्दिकः पूर्व्वं ब्राह्मणो वेदपारगः। तस्य सुनन्दिका भार्य्या वन्ध्या तु यशोभिनी। तस्यापत्यं न सञ्जातं वृद्धत्वबन्ध्यभावतः। तेनान्यस्य सुता जातु सुशीला रूपसंयुता। ब्राह्मणस्य कुले जाता गृहीत्वा पोषिता स्वयम्। तस्य पुत्रीं गृहे तस्य ब्राह्मणी सा ह्यपालयत्। विवाहार्थन्तु विप्रस्य दत्ता सोमेश्वरस्य च। वेदोक्तविधिना तत्र विवाहमकरोत्तदित्यादि। अत्रापि स्वयं गृहीत्वेति श्रवणं कृत्रि-

---

महिष्यामिति। भोजायां महिष्यामित्यन्वयः। 'पूर्व्वं' प्रथमत इत्यर्थः। ..., दश पुत्रान् दर्शयति वसुदेव इत्यादिना। 'ततः' वसुदेवजन्मानन्तरमित्यर्थः। अस्य शूरस्येत्यर्थः। वराङ्गना इति।—ता एव नामतो निर्दिशति पृथुकीर्त्तिरिति। कुन्तिर्नाम राजा। 'यस्यां' पृथायाम्। 'सः' प्रसिद्ध इत्यर्थः। 'तेन' सुनन्दिकेनेत्यर्थः। 'ब्राह्मणी' सुनन्दिकपत्नी सुनन्दिका। विवाहमकरोदिति।—सोमेश्वर इति

मन्त्रे लिङ्गम्। नच स्वयं पोषितेत्यन्वयः[*]साधुः। ग्रहणपोषणयोः क्त्वाप्रत्ययाभिहितसमानकर्त्तृकत्वेनैव स्वयम्पोषणस्य सिद्धत्वात्। दत्तात्मिकायाः पुराणान्तरेषु स्मरणम्।

अपविद्धायां महाभारते आदिपर्व्वणि शाकुन्तले दुष्मन्त-शकुन्तलासंवादानुवादकमेव वाक्यम्। जनयामास स मुनिर्मेनकायां शकुन्तलाम्। प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीम्॥ जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु। कृतकार्य्या ततस्तूर्णमगमच्छक्रसंसदम्॥ तं वने विजने गर्भं सिंहव्याघ्रसमाकुले। दृष्ट्वा शयानं शकुनाः समन्तात् पर्य्यवारयन्॥ नेमां हिंस्युर्वने बालां क्रव्यादा मांसगृद्धिनः। पर्य्यरक्षंस्तदा तत्र शकुन्ता मेनकात्मजाम्॥ उपस्प्रष्टुं गतश्चाहमपश्यं शयितामिमाम्। निर्ज्जनेऽपि वने रम्ये शकुन्तैः परिवारिताम्॥ आनयित्वा ततश्चैनां दुहितृत्वे न्यवेशयम्। शरीरकृत् प्राणदाता यस्य चान्नानि भुञ्जते॥ क्रमेण

---

शेषः। पोषितेत्यन्वयः साधुरिति।—तथा च स्वयं पोषितेत्यन्वयेन कृत्रिमत्वे प्रमाणं न स्यात् कृत्रिमः स्यात् स्वयं कृत इति लक्षणया— योगादित्याशयः।

'शाकुन्तले' शकुन्तलोपाख्याने। 'स मुनिः' विश्वामित्रः। मेनकायां नामाप्सरसि। हिमवतः प्रस्थे एकदेशे देवताभूमावित्यर्थः। 'अभितः' समीपे। 'मालिनीमनु' मालिनीतीरे। 'मांसगृद्धिनः' मांसलोभिनः। क्रव्यं मांसं तदद इत्यर्थः। 'उपस्प्रष्टुं' स्नातुम्। 'शरीरकृत्' जनकः। 'प्राणदाता' व्यापात् दुर्गाच्च रक्षक इत्यर्थः। यस्येति स्पष्टम्। क्रमेणेति।—क्रमेन शरीरकृत्प्राणदातान्नदातॄणां समवाये

ते त्रयोऽप्युक्ताः पितरो धर्मशासने। निर्जने तु वने यस्मात् शकुन्तैः परिवारिता। शकुन्तलेति नामास्याः कृतञ्चापि ततो मया। एवं दुहितरं विद्धि मम विप्र शकुन्तलाम्॥ शकुन्तलोवाच। एतदाचष्ट पृष्टः सन् मम जन्म महर्षये। सुतां कण्वस्य मामेवं विद्धि त्वं मनुजाधिप॥ कण्वं हि पितरं मन्ये पितरं स्वमजानतीति। अत्रोत्पत्त्यपहरणादपविद्धविधिः स्पष्ट एव। तदेवं तत्तद्विध्यविनाभूतलिङ्गदर्शनेन तत्तद्विधिसिद्धिः सुकरैवेत्यलं पल्लवितेन।

अथ दत्तकाशौचनिर्णयः। तत्र जनककुले परस्परं नास्त्येव। गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः। गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधेति मनुवचनात्। अत्र च स्वधापिण्डशब्दौ अशौचादिसकलपितृकर्मोपलक्षणं पिण्डदानादिनिमित्तीभूतगोत्ररिक्थयोर्निवृत्तिश्रवणात् प्रेतपिण्डदानादेराशौचपूर्व-

---

शरीरत्वत्कर्मैव मान्यत्वं प्रदर्शितम्। नामास्या इति।—तथाच शकुन्तैर्लायते या सा शकुन्तलेति व्युत्पत्तिः। विप्र इति मनुजाधिप इति दुष्मन्तसम्बोधनमिदम्। अपविद्धविधिः स्पष्ट एवेति।—अयं प्रपञ्चो भ्रान्तिमूलतया विजृम्भते सजातीयेष्वयं प्रतिलक्षणदेषु यथा विधिदृष्टादिविरोधात् सजातीयत्वे दुष्मन्तकर्तृकविवाहस्यासामञ्जस्यचरितत्वापत्तेः। तदेवमिति।—एतदन्यथानुपपन्नप्रमाणदर्शनेत्यर्थः।

अथेति। उच्यते इति शेषः।—जनककुले इति।—शुद्धदत्तकस्येति शेषः, द्व्यामुष्यायणस्य उभयकुले अशौचसत्त्वसम्भवात्। प्रेतपिण्डदानादेरिति।—आदिपदेन और्ध्वदेहिकतर्पणादीनां परिग्रहः। अशौचपूर्वकत्वमिति।—अशौचं पूर्वकाले यस्येति अशौच-

कालत्वनियमात् ततश्च पिण्डनिवृत्त्या अशौचनिवृत्तिरर्थसिद्धैव। असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्। प्रथमेऽहनि यो दद्यात् स दशाहं समापयेत्। प्रयाहिशान्तु नैव स्यात् कर्त्तुः स्वस्ति तथापि च। यावदशौचमुदकं पिण्डमेकञ्च दद्युरित्यादि-वाक्यपर्य्यालोचनया पिण्डाशौचयोः समव्याप्तिसिद्धेः। तस्मात् दत्तकतज्जनकादीनाञ्च परस्परं नाशौचादि। यत्तु बैजिकादपि सम्बन्धादनुरुन्ध्यादघं त्र्यहमिति तदपि व्यपैति ददतः स्वधेत्य-नेनापोदितम् दत्तकातिरिक्तस्थले तस्य सावकाशत्वात्। किञ्च अशौचोदकदानादौ गोत्रसापिण्ड्ययोर्मिलितयोर्निमित्तत्वावगमात् अन्यतरापाये न तन्निमित्तमशौचादि।

---

पूर्व्वकालव्यक्तत्वनियमादित्यर्थः। यावदशौचं तावत् प्रेतोदकं पिण्डमेकञ्च दद्युरिति विष्णुसूत्रात् तथाच प्रेतपिण्डादिदानाशौचयोः समव्याप्तिनियमात् गोत्ररिक्थे जनयितुरित्यनेन पिण्डनिवृत्तिदर्शनात् एकापायेमान्यतरनिवृत्तेरर्थसिद्धत्वादिति भावः। एतदभिप्रेत्याह तत-श्चेति। प्रयाहिशान्त्विति।—दाहकवाहकादीनामित्यर्थः। उपसंहरति तस्मादिति। नाशौचादीति।—आदिपदेन नीरक्षीरदानप्रेतसर्पणादीनां परिग्रहः। बैजिकादपि सम्बन्धादिति।—तथाच दत्तके जनकस्य बीज-सम्बन्धात् त्र्यहमशौचं स्यादित्यभिप्रायः। तदपीति।—तथाच बैजि-कादपि सम्बन्धादिति सामान्यवचनस्य गोत्ररिक्थे जनयितुरित्य-नेनापवादादित्यभिप्रायः। दत्तकातिरिक्तस्थले इति।—तथाच तद्वचन-स्यान्यपूर्व्वाजातापत्यविषयत्वमवतिष्ठते। अतएव कुल्लूकभट्टः बैजिके तु परपूर्व्वभार्य्यासामुत्पन्ने त्र्यहमशौचं भवतीति तद्वचनं व्याख्यात-वान्। तन्निमित्तमिति।—गोत्रपिण्डमिलितं। 'तदानुगं' पिण्डा-

तथाच शङ्खलिखितौ । सपिण्डता तु विज्ञेया गोत्रतः साप्तपौरुषी । पिण्डश्चोदकदानञ्च शौचाशौचं तदानुगमिति । प्रतिग्रहीतृपित्रादीनान्तु दत्तकादिमरणे त्रिरात्रमशौचम् । तदाह वृहस्पतिः । 'अन्याश्रितेषु दारेषु परपत्नीसुतेषु च । मृतेष्वाप्लुत्य शुद्ध्यन्ति त्रिरात्रेण द्विजोत्तमाः ॥ इदञ्च त्रिरात्राशौचविधानं यत्प्रतियोगिकं भार्य्यात्वं पुत्त्रत्वञ्च तस्यैव ।

त्रिपुरुषानन्तरवर्त्तिनां पितृसपिण्डानान्तु पृथगाह मरीचिः । सूतके मृतके चैव त्रिरात्रं परपूर्व्वयोः । एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुरिति । यद्यपि दत्तकादीनामुत्पन्नानामेव स्वीकारात् परिग्रहीतृतादुत्पत्त्याशौचं न घटते तथापि तदप-

---

नुगम् । प्रतिग्रहीत्रिति ।—प्रतिग्रहीतृरूपपित्रादीनां त्रयाणामित्यर्थः । दत्तकादीति ।—आदिपदेन क्षेत्रजादेर्ग्रहणम् । 'अन्याश्रितेषु दारेषु' पुनर्भूष्वित्यर्थः । 'परपत्नीसुतेषु' दत्तकादिष्वित्यर्थः । एतेषु मृतेषु त्रिरात्रेणाप्लुत्य स्नात्वा शुद्ध्यन्तीत्यन्वयः । द्विजोत्तमा इति प्राधान्यख्यापनार्थं, तेन शूद्रा अपीति ज्ञेयम् । यत्प्रतियोगीति ।—यः प्रतियोगी सम्बन्धी यस्य भार्य्यात्वस्य पुत्रत्वस्य च सत् । एतेनेदमुक्तं भवति दत्तकमरणे ग्रहीतुः पुनर्भूमरणे तदुपादित्सुरेवाशौचं न तु जनकस्य पूर्व्वपत्युर्वा ।

त्रिपुरुषानन्तरवर्त्तिनामिति । पितृसपिण्डानाम् । प्रतिग्रहीतुः प्रपितामहादीनां त्रयाणां दत्तकापुत्रस्याणामिति यावत् । परः पूर्व्वस्मिन् पत्यौ सम्बन्धो ययोः पुनर्भूदत्तकयोरित्यर्थः । सपिण्डानां प्रतिग्रहीतुः सपिण्डानां तद्वृद्धप्रपितामहादीनाम् । पितुः प्रतिग्रहीतु-

त्योत्पत्त्याशौचं घटत एवेति सूतकनिर्द्देशः। इदमपि समानजातीयानामेव पुत्त्राणाम्। तथाच ब्रह्मपुराणम्। औरसं वर्जयित्वा तु सर्व्ववर्णेषु सर्व्वदा। क्षेत्रजादिषु पुत्त्रेषु जातेषु च मृतेषु च। अशौचन्तु त्रिरात्रं स्यात् समान इति निश्चय इति। सर्व्वदा सर्व्वकालं उपनयनानन्तरमपि। अन्याश्रितेषु दारेषु परपत्नीसुतेषु च। गोत्रिणः स्नातशुद्धाः स्युस्त्रिरात्रेणैव तत्त्वविदिति। यद्यपि प्रतिग्रहीतृमरणे दत्तकस्य दशाहाशौचं न घटते सपिण्डसगोत्रत्वयोर्म्मिलितयोरभावात् अशौचविशेषस्याहत्य नोपलभ्यते तथापि गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन्। प्रेताहारैः समं तत्र दशरात्रेण शुद्ध्यतीति मरीचिवचनेन शिष्यस्य गुरुप्रेतकार्य्यकरणनिमित्तदशाहाशौचमुक्तम्भवति। अत्र गुरुशब्द आचार्य्यादिरूपः। गुरुत्वमत्राप्यस्ति उपनयनादिकर्त्तृत्वात्। ततश्च दत्तकस्य प्रतीग्रहीतृक्रियाकरण एव दशरात्राशौचं सिध्यति

---

स्पर्शेत्यर्थः। इदं त्रिरात्राशौचमित्यर्थः। सर्व्वदेति।—सर्व्ववर्णेषु सर्व्वदा इति पूर्व्वोक्तवचनस्येत्यर्थः। तथा चाह 'आदन्तजननात् सद्य आचूड़ादेकरात्रकम्। त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परं' इत्यादिवचनानामनवकाशः। 'गोत्रिणः' सोदकसगोत्रा इत्यर्थः। तत्त्ववित् प्रतिपत्ता। गुरोरिति। गुरोराचार्य्यादेरसपिण्डस्य मृतस्य शिष्योऽन्त्येष्टिं कृत्वा प्रेतनिर्हारकैर्गुरुसपिण्डैस्तुल्यो दशरात्रेण शुद्धो भवतीत्यर्थः। क्रियाकरण एव औरसाभावे सतीति शेषः तत्रापि तस्यैव सर्व्वाधिकारात् पित्रादेः शवदहनेषां पूर्व्वाभावे परःपर

अन्यथा त्रिरात्रमेव पूर्व्वोक्तवचनात्। एवं दत्तकस्य प्रतिग्रहीतुस्त्रिपुरुषानन्तरवर्त्तिसपिण्डमरणे एकाहः, एकाहस्तु सपिण्डानामिति पूर्व्वोक्तमरीचिवाक्यात्। सोदकसगोत्रयोर्मरणे स्नानमात्रम्। अन्याश्रितेषु दारेषु परपत्नीसुतेषु चेति पूर्व्वोक्तप्रजापतिवाक्यात्।

अथ दत्तकपुत्रकर्त्तृकश्राद्धनिर्णयः। तथा च जाठ्कर्णः। प्रत्यब्दं पार्व्वणेनैव विधिना क्षेत्रजौरसौ। कुर्य्यातामितरे कुर्य्युरेकोद्दिष्टं सुता दशेति। प्रत्यब्दमिति सामान्योपादानेन मघादिश्राद्धप्राप्तावपि क्षयाहश्राद्धमेवात्र विवक्षितम्। पितुर्गतस्य

---

इति याज्ञवल्कीयात्। अन्यथेति। औरसे सति दत्तकेन क्रियाया अकरणे। पूर्व्वोक्तवचनादिति। अन्याश्रितेष्वित्यादिपूर्व्वोक्तवचनादित्यर्थः। त्रिपुरुषानन्तरेति। प्रतिग्रहीतृतत्पितृपितामहेभ्यः पूर्व्वेषामित्यर्थः।

तदय संक्षेपः।

दत्तकादिमरणे यथासम्भव जनने वा परस्परं जनककुले नाशौचं, दत्तकमरणे तत्पुत्रपौत्रयो र्वा जनने प्रतिग्रहीतृतत्पितृपितामहानां त्रिरात्रमशौचं, तेषां मरणे तत्पुत्रादीनां जनने मरणे वा दत्तकस्य तदेवाशौचम्। प्रतिग्रहीतुः प्रपितामहादीनां सकुल्यानां दशमपुरुषपर्य्यन्तानामेकाहः, सोदकसगोत्रयोः स्नानमात्रं, तेषां मरणे यथासम्भव जनने च तदेवाशौचं, दत्तकस्य यन्मरणे यदशौचं तन्मरणे तदशौच सतसि बाधके इति न्यायात्, प्रतिग्रहीतुः क्रियाकरणे दत्तकस्य दशरात्रं तदकरणे त्रिरात्रमिति विशेष।

. क्षयेति। प्रत्यब्दं क्षयाहनिमित्तकमित्यर्थः। 'इतरे' दत्तकादय इत्यर्थः। एतत्तु पार्व्वणविधानं सामेदेव, पार्व्वणेन विधानेन देयमग्निमता सदा इति वचनात्। निरग्नीनां सर्व्वेषां एकोद्दिष्टम्। पितु

देवलमौरसस्य त्रिपौरुषम्। सर्व्वत्रानेकगोत्राणामेकोद्दिष्टं क्षये-ऽहनीतिपराशरवाक्ये क्षयाहपदोपादानात्। नचात्राप्यनेकगोत्र-पदं मातामहादिपरं तस्य पित्रौरसपदसमभिव्याहारेण औरस-प्रतियोग्यनौरसपुत्रपरत्वस्यैवौचित्यात्। अन्यथा पितुः पुत्रेण क्षयेऽहणि त्रिपुरुषं कर्त्तव्यमित्येतावतैवार्थसिद्धौ औरसपदोपादा-नानर्थक्यापातात्। नच मातामहादीनामपि क्षयाहे एकोद्दिष्टमेव भवतीति नियमोऽस्ति। तथाच मरीचिः। मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः। तेषान्तु पितृवत् श्राद्धं कुर्य्युर्दुहितृ-सूनव इति। अत्र त्रयाणां मातामहानां श्राद्धविधानात् पार्व्वण-मवगम्यते। नच पितृवदित्यनेन मातामहानामपि पार्व्वणैको-द्दिष्टयोर्विकल्पः। तस्य मातामहश्राद्धनित्यताविधानपरत्वात्।

---

दिति। 'गतस्य' मृतस्य। 'देवल' श्राद्धोद्देशत्वं तथा च औरसेन सर्व्वत्र पितृमातामहादिश्राद्धे क्षयाहे पार्व्वणमेव कर्त्तव्यम्। अनेक-गोत्रपदवाच्यैर्दत्तकादिभिस्तु एकोद्दिष्टमेव कर्त्तव्यमिति भावः। अनेक-गोत्राणां मातामहानामिति तु नार्थः तथात्वे औरसपदप्रयोगस्य वैयर्थ्यात् पुत्रेण क्षयाहे पार्व्वणं कर्त्तव्यमित्यनेनैव मातामहानां क्षयाहे एकोद्दिष्टस्य कर्त्तव्यताया अभिहितत्वात् तथाच औरसपद-सामर्थ्यात् आकाङ्क्षया अनेकगोत्राणामित्यस्यानौरसपुत्रादिवाचकता युक्ता। नच मातामहस्य क्षयाहे पार्व्वणविधानायैवसदिति वाच्यं वक्ष्यमाणमरीचिवचनेन मातामहानामपि क्षयाहे पार्व्वणाभि-धानात्। पार्व्वणं कुरुते यस्तु केवलं पितृकारणात्। मातामहानां न कुरुते पितृहा स प्रजायते इति वचनात्। ननु यथा क्षेत्रजौरसाभ्यां पितुः क्षयाहे पार्व्वणं कार्य्यं इतरैरेकोद्दिष्टं, तथा औरसक्षेत्र-

किञ्च कर्पूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोड़शम्। प्रत्याब्दिकन्तु शेषेषु पिण्डाः स्युः षडिति स्थितिरित्यत्रापि प्रत्याब्दिकशब्दस्यापि प्रत्यब्दशब्दस्य मघादिश्राद्धपरत्वं कुतो न स्यात् इष्टापत्तिरिति चेत् न। मघादिष्वपि दत्तकादीनामेकोद्दिष्टापत्तेः नचैतत् कस्यापीष्टं प्रत्याब्दिकशब्देन श्राद्धमात्रसंग्रहे शेषपदाभिधेयश्राद्धान्तराभावेन पर्य्युदासासम्भवात्। तस्मादौरसेन क्षयाहे मातापित्रोः पार्वणमेव कार्य्यं इतरैर्दत्तकादिभिरेकोद्दिष्टमेव इत्येव व्यवस्था साधीयसीत्यलं विस्तरेण।

---

*श्रभ्यां दौहित्राभ्यां मातामहस्य क्षयाहे पार्व्वणमेव कर्त्तव्यं,* दत्तकादिभिरेकोद्दिष्टमिति विकल्पे मानुष्ठानार्थं पितृवदित्युक्तमित्याह न चेति। किञ्चेति। कर्पूं इति। चतुरङ्गुलपृथ्वीस्तावदन्तरास्तथाधःखाता वितस्त्यायतास्तिस्रः कर्षूः कुर्य्यात् कर्षूसमीपे अग्नित्रयमुपसमाधाय परिस्तीर्य्य एकैकस्मिन्नाहुतित्रयं जुहुयात् इति श्राद्धविवेकधृतविष्णुसूत्रं, तेन कर्षूसमन्वितं अन्वष्टकाश्राद्धमिति। एतत्तु छन्दोगपरं तेषां मात्रादिचित्कश्राद्धनिषेधात् न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते इति वचनात्। श्राद्धषोड़शमिति।—द्वादशप्रतिमास्यानि आद्यं षाण्मासिके तथा। सपिण्डीकरणञ्चैव इत्येतत् श्राद्धषोड़शमित्युक्तम्। 'प्रत्याब्दिकं' प्रतिसांवत्सरिकम्। पिण्डाः स्युः षडिति स्थितिरित्यनेन पार्व्वणमभिहितम्। प्रत्यब्दशब्दवदिति।—प्रत्यब्दं पार्व्वणेनैव विधिना क्षेत्रजौरसौ इत्याद्युक्तम्। पर्य्युदासासम्भवादिति।—तदितरस्य श्राद्धस्याभावादित्यभिप्रायः। उपसंहरति तस्मादिति।—औरसेनेति क्षेत्रजस्याप्युपलक्षणम्। प्रत्यब्दं पार्व्वणेनैव विधिना क्षेत्रजौरसौ इति पूर्व्वोक्तशास्त्रीयात्। एकोद्दिष्टमेवेति।—क्षयाह इति शेषः।

अथ दत्तकविभागः। तत्र वशिष्ठः। तस्मिंश्चेत् प्रतिगृहीते औरस उत्पद्येत चतुर्थभागभागी स्याद्दत्तक इति। तदभावे तु सर्वहरः।

इति श्रीधर्माधिकारिरामपण्डितात्मजश्रीनन्दपण्डित-
विरचिता दत्तकमीमांसा समाप्ता।

---

प्रकरणान्तरमाह अथेति। 'तस्मिन्' तस्मिन्निति। दत्तके इत्यर्थः। तस्य संहितायां प्रक्रान्तत्वादनुवृत्तेः। 'तदभावे' औरसाद्यभावे इत्यर्थः। औरसाभावे क्षेत्रजादिसत्त्वेऽपि चतुर्थांशभाक्त्वस्य शास्त्रीयत्वादिति।

तदयं प्रकरणसंक्षेपः।

पिण्डोदकनामसंकीर्तनाविच्छिन्नतापरिहारादिसर्वकार्यार्थं औरसपुत्राभावे दत्तकादयः प्रतिनिधयः कर्त्तव्याः। तत्रापि कलौ दत्तककृत्रिमावेव कर्त्तव्यौ, अन्येषां निषेधात्। कदाचित् औरसानुमतौ प्रतिनिधिपुत्त्र सिध्यति। दत्तकसत्त्वे प्रतिगृहीते दत्तकान्तरः सिध्यत्येव अकृतदारेण मृतपत्नीकेनापि दत्तकः कर्त्तुं शक्यते एव, देशाद्यनवस्थायामपि दत्तकग्रहणं शास्त्रीयं नित्यत्वात् निरवकाशनैमित्तिकत्वाच्च। दत्तककरणे कालनियमो नास्ति, अपुत्त्रत्वावधारण एव ग्रहीतुं शक्यते। अप्राप्तव्यवहारेण बालेन अप्राप्तव्यवहारया अजातरजस्कयापि मात्रया ग्रहीतुं शक्यते, धर्म्मकार्ये बाल्यादेरप्रतिबन्धकत्वात् बाधकाभावात् पौत्रप्रपौत्रसत्त्वेऽपि नाधिकारः प्रयोजनाभावात्। पुत्रसत्त्वेऽपि दौहित्रजन्मकालावाप्त्यर्थं दत्तकादिकन्याकरणं शास्त्रीयं श्रीमच्छिष्टान्यतमोक्तविधिपरिग्रहीतस्यैव पुत्रत्वम्। भ्रातृपुत्रेऽपि ग्रहणविधिरावश्यक। ज्येष्ठपुत्रदानग्रहणयोर्नाधिकारः एकपुत्रग्रहणनिषेधः, गृहीतः सिद्ध एव तत्र दातुरेव प्रत्यवायमात्रम्।

एकपुत्त्रस्य द्व्यामुष्यायणत्वसिद्धिः। कथं द्व्यामुष्यायणो भवितुमर्हति तस्य पुत्त्रान्तरत्वानभ्युपगमेन तदन्तर्गतत्वात् पुत्त्रिकाकरणे नाधिकारः। दुर्भिक्षाद्यापदं विना पुत्त्रदाननिषेधः, दाने दातुरेव दोषो ग्रहीतुः प्रत्यवायो नास्ति। विधवाया नाधिकारः, शूद्रकर्त्तृकपुत्त्रग्रहणस्थले ब्राह्मणद्वारा होमः शास्त्रार्थः। जीवति भर्त्तरि पूर्वं तदनुमतायाः पश्चाद्विधवाया अपि पुत्त्रग्रहणाधिकारः। जीवति पत्यौ तदनुमतौ स्त्रियाः पुत्त्रदानाधिकारः। प्रोषिते मृते वा तदनुमतिं विनापि पञ्चाब्दाः पुत्त्रपरिग्रहकालः, तत्राकृतजातकर्म्मादिर्मुख्यः कृतचूडो गौणः कृतचूडस्तु गृहीत उभयसम्विदं विनापि द्व्यामुष्यायणः, सम्विदा तु यदाकदाचिद्गृहीतो द्व्यामुष्यायणः जनकेन कृतजातकर्म्मादिचूडा-पर्य्यन्तसंस्कारः पुत्त्रो गृहीत्वा यथाविधिपरिगृहीतोऽपि तस्य दासः। पञ्चाब्दानन्तरं अकृतजातकर्म्मादिरपि गृहीतोऽपि दासः, पञ्चाब्दा-नन्तरं अकृतजातकर्म्मादिरपि गृहीत्वा तत्संस्कारकरणेऽपि दास एव। दासपुत्त्रस्तु प्रतिग्रहीत्रा विवाहनीयो ग्रासाच्छादनदानैः प्रतिपाल-नीयश्च भवति। विवाहे प्रतिग्रहीतृगोत्रोल्लेखसमाचारः, कृतचूड़ग्रहणे पुत्त्रेष्टिविधिरावश्यकः; भ्रातृपुत्त्रग्रहणासम्भवेऽन्यपुत्त्रग्रहणनिषेधः अक-रणे न प्रकृतहानिः ग्रहीतुः प्रत्यवायमात्रं; सर्वेषां सजातीयपुत्त्रग्रहण-त्वेऽपि सन्निहितः सपिण्डो मुख्यः, तदसम्पत्तौ भिन्नगोत्रसपिण्ड आसन्नः। सपिण्डः सप्तमपुरुषावधिकः। तदभावे सकुल्यः स च दशम-पुरुषावधिकः। तदभावे सोदक आसन्नः स च चतुर्द्दशपुरुषावधिकः। तदभावे सगोत्रः स चैकविंशतितमपुरुषावधिकः। तदभावे सगोत्र-सजातीयः, तदभावे भिन्नगोत्रोऽपि सजातीयः। सपिण्डादिपुत्त्रग्रहणे यन्मातरि नियोगः सम्भवति तादृशः पुत्त्रो ग्राह्यः। अतो भगिनी-पुत्त्रो भगिन्या वा भ्रातृपुत्त्रो न ग्राह्यः, ग्रहीतो नैव सिध्यति। क्षत्रियवैश्ययोः पुरोहितगोत्रेणैव सगोत्रत्वं, दत्तकानां ग्रहीतृकुले

पिण्डान्वयरूपं त्रैपुरुषिकं सापिण्ड्यं सगोत्राविवाह्यत्वप्रयोजकं, जनककुले सामान्यावयवान्वयरूपं सापिण्ड्यं न पिण्डान्वयरूपं, गोत्रैरिति ददतः स्वधेत्यनेनापवादात्।

दत्तकादयो द्विविधाः, केचित् नित्यवद्द्व्यामुष्यायणाः केचिदनित्यवद्द्व्यामुष्यायणाः। ये जनकप्रतिग्रहीत्रोरावयोरयं पुत्र इति संप्रतिपन्नास्ते नित्यवद्द्व्यामुष्यायणाः। ये च चूडापर्य्यन्तसंस्कारैर्जनकेन कृता उपनयनादिभिश्च प्रतिग्रहीत्रा ते अनित्यवद्द्व्यामुष्यायणाः। यस्मात् जातमात्रस्य ग्रहणे उभयगोत्रेण संस्काराभावेन ग्रहीतृमात्रपुत्रतया जनकपुत्रत्वाभावात्तेऽनित्याः। सगोत्रपरिग्रहेऽपि प्रतिग्रहीतृगोत्रमात्रं प्रतिग्रहीतृजनकगोत्रसाम्येऽपि प्रतिग्रहीतृगोत्रमात्रव्यपदेशः शास्त्रीयः। अत् फलमेतत् यत् तद्गोत्राभावेन जनकपिण्डदानाधिकार इति। दत्तकेन प्रतिग्रहीतृशाखोक्तं कर्म्म कर्त्तव्यम्। शुद्धदत्तकादीनां प्रतिग्रहीत्र्या मातुः पित्रादयो मातामहप्रमातामहवृद्धप्रमातामहाः श्राद्धे तेषां देवतात्वं नतु जनन्याः। द्व्यामुष्यायणदत्तकादीनान्तु जनन्याः प्रतिग्रहीत्र्या अपि पित्रादयो मातामहादयः। अकृतदारकर्त्तृकदत्तकादिपुत्रग्रहणे मातामहपक्षो नास्ति। प्रमीतदारस्य दत्तकादिग्रहणे प्रतिग्रहीत्र्या मातुः पित्रादयो मातामहादयः। प्रतिग्रहीतृकुलदेवताकुलधर्म्मावेव दत्तकस्य नतु जनककुलदेवताकुलधर्म्मावपि।

ज्येष्ठसापत्नभ्रातृसत्त्वे कनिष्ठस्य विवाहाग्निहोत्रकरणे न तयोः परिवेत्तृपरिवित्तित्वे। जनककुले ज्येष्ठभ्रातृसत्त्वे वयःकनिष्ठदत्तकस्य विवाहादौ न तयोः परिवेत्तृत्वपरिवित्तित्वे। देवरेणोत्पादितस्य क्षेत्रजस्य देवरस्यौरसपुत्रस्य ज्येष्ठत्वेऽपि कनिष्ठक्षेत्रजस्य विवाहादौ न तयोः परिवेत्तृत्वपरिवित्तित्वे। प्रतिग्रहीतृकुलश्राद्धीयद्रव्यं दत्तकाय प्रतिग्रहीतृजनककुलश्राद्धीयद्रव्यं द्व्यामुष्यायणाय न देयम्। औरस-

कन्यापचारे पुत्त्र इव दत्तकादिपुत्त्रेऽपि प्रतिनिधयो भवन्ति तत्र ग्रहणस्यापि नित्यत्वात्।

दत्तकादिमरणे यथासम्भवं जनने वा जनककुले नाशौचम्। दत्तकमरणे तत्पुत्त्रपौत्त्रयोर्व्वा जनने प्रतिग्रहीतृतत्पितृपितामहादीनां त्रिरात्रमशौचम्। सगोत्रसपिण्डदत्तकादौ संपूर्णाशौचं, तत्राकाङ्क्षा-विरहेण सामान्यसापिण्ड्यप्रयुक्तदशाहाद्यशौचबाधे हेत्वभावात्, तेषां मरणे तत्पुत्त्रादीनां जननमरणे वा दत्तकस्य सदैवाशौचम्। प्रति-ग्रहीतुः प्रपितामहादीनां सकुल्यानां दशमपुरुषपर्य्यन्तानामेकाहः। सोदकसगोत्रयोः स्नानमात्रं, तेषां मरणे यथासम्भवं जनने च सदेवा-शौचं दत्तकस्य यन्मरणे यदशौचं तन्मरणे सदैवाशौचम्, असति बाधके इति न्यायात्। प्रतिग्रहीतुः क्रियाकरणे दत्तकस्य दशरात्रं तदकरणे त्रिरात्रमिति विशेषः।

सामिद्धिनजौरसाभ्यां पितुः क्षयाहे पार्व्वणं कर्त्तव्यं, निरग्निना एकोद्दिष्टं, साग्निनिरग्निभिर्दत्तकादिभिरेकोद्दिष्टमेव कर्त्तव्यम्। माता-महानामपि क्षयाहे पार्वणविधिरस्ति, पार्वणं कुरुते यस्तु केवलं पितृ-कारणात्। मातामहानां न कुरुते पितृहा स प्रजायते इति स्मरणात्। आद्यादिसपिण्डीकरणान्तषोडशश्राद्धानि यथामावास्याकर्त्तव्यानि च सर्व्वैरेव कर्त्तव्यानि। दत्तकग्रहणान्तरं औरसे जाते दत्तकश्चतुर्थभाक् भवति औरसाभावे तु सर्व्वहरः स्यादिति।

"नास्त्री व्याख्यापटुत्वं ललितमपि वचः सज्जनाह्लादनं यत्
नास्त्री विकाहतोऽर्थावगतिरधिधियां येन संबोधनं स्यात्।
नास्यां बालावबोधे चतुरमपि वचो येन बालाग्रहः स्यात्
किन्त्वस्यामादरो यत् भवति मतिमतां केवलं नव्यभावात्॥
विद्वान् रामकिशोर न्यायिपुरुषपक्षवत् सुतः शङ्करः
पुत्त्रो रामतनुर्भूय मतिमान् वत्साकर्षशोधितः।

तत्पुत्रो भरतकृत छतिरियं या शाकसवत्सरे
ष्वङ्गाश्वाग्निविधून्मिते विरचिता मूलेन मुद्राङ्किता ।

इति श्रीभरतचन्द्र शिरोमणिकृता दत्तकमीमांसाया
बालविबोधनीनाम टीका समाप्ता ।

---

# দত্তকমীমাংসার তাৎপর্য্যার্থ।



ঔরসপুত্রের অভাবে পিণ্ড, তর্পণ, নামসংকীর্ত্তন ও পুন্নাম-নরকনিস্তৃতির জন্য প্রতিনিধিপুত্র গ্রহণ করিবে ৮।১।* ক্লীবাদি পর্য্যুদস্তপুত্রের পিণ্ডদানে অধিকার নাই এই নিমিত্ত তৎসত্ত্বেও প্রতিনিধিপুত্র গ্রহণ করিতে হইবেক। ঔরস, ক্ষেত্রজ, পুত্রিকাপুত্র, পৌনর্ভব, কানীন, গূঢ়োৎপন্ন, সহোঢ়জ, দত্তক, ক্রীত, কৃত্রিম, অপবিদ্ধ, স্বয়মুপাগত, এই দ্বাদশপ্রকার পুত্র শাস্ত্রসিদ্ধ। তন্মধ্যে পশ্চিমপ্রদেশীয়দিগের কলিতে ঔরস দত্তক ও কৃত্রিম এই তিন প্রকার পুত্র শাস্ত্রানুসারে চলিতেছে ১১।৯ ইতর পুত্র গ্রহণ নিষেধ ২৩।১। এবং ঔরসপুত্রের অনুমতিতে প্রতিনিধিপুত্র গ্রহণ করিতে পারে ৬।৫। দত্তকসত্ত্বেও দত্তকান্তর গ্রহণ করিলে সিদ্ধ হয় ৮৪।।৮।

অকৃতবিবাহ ব্যক্তি ও বিবাহানন্তর যাহার স্ত্রীবিয়োগ হইয়াছে এমন পুরুষও দত্তক গ্রহণ করিতে পারে ৮৩।১৫।

---

* ইহার প্রমাণ মূলে ২ পৃষ্ঠায় ৫ পংক্তিতে আছে। এইরূপ সকল স্থলে অঙ্ক দ্বারা প্রমাণানুসন্ধানের প্রণালী লিখিত হইল।

অকৃতদারের উক্ত দত্তকপুত্রের মাতামহ পক্ষই নাই। প্রমীতদার ব্যক্তির ঐ মৃতপত্নীর পিত্রাদি তাহার দত্তকের মাতামহাদি হইবে, কারণ পতির গ্রহণেই মৃতপত্নীর গ্রহণ সিদ্ধ। যেহেতু দত্তকগ্রহণকার্য্য নিত্যকর্ম্ম এবং নিরবকাশ নৈমিত্তিক, এজন্য দেহাশুদ্ধিতেও সম্বৎসরমধ্যে দত্তকগ্রহণ করিতে পারে। দত্তকগ্রহণের কালপ্রতীগ্রন্থের অবধারণ মাত্রেই গ্রহণ করিতে পারে ২... লিকা স্ত্রী এবং নাবালক পুরুষ উভয়েই পুত্র লইতে... র্য্যে বাল্যাদিপ্রতিবন্ধক হয় না। যাহার পুত্র নাই, কিন্তু পৌত্র বা প্রপৌত্র আছে সে প্রতিনিধিপুত্র লইতে পারে না। ৩। ৯। যাহার পুত্র আছে কন্যা নাই সে দৌহিত্রদ্বারা স্বর্গলোকপ্রাপ্তির জন্য দত্তকাদিকন্যা গ্রহণ করিতে পারে ১০৪। ১৪। শৌনক-বশিষ্ঠান্যতমবিধানুসারে পরিগৃহীত পুত্র শাস্ত্রসিদ্ধ, বিধিব্যতিরেকে গৃহীতপুত্র সিদ্ধ নহে ৮২। ৪।

যাহার গ্রহণ সম্ভব এমন ভ্রাতৃপুত্র থাকিলে অগ্রে তাহাকেই লইবে তৎসত্ত্বে অন্যসপিণ্ডের পুত্র লইতে পারে না। ৪২ ৯। যাহার একমাত্রপুত্র তাহার ঐ পুত্র অন্যে গ্রহণ করিতে পারে না ৫৪। ৫। যদি গ্রহণ করে তাহা সিদ্ধ হয় বটে, কিন্তু নিষেধের উল্লঙ্ঘনজন্য পুত্রদাতার প্রত্যবায় জন্মে। জ্যেষ্ঠপুত্র গ্রহণ করিলে কদাচ সিদ্ধ হয় না, কারণ জ্যেষ্ঠসন্তান পিণ্ডদানে মুখ্য হয়, কিন্তু ঐ পুত্র দ্ব্যামুষ্যায়ণ হইতে পারে। কনিষ্ঠে দ্ব্যামুষ্যায়ণপুত্রগ্রহণে নিষেধ নাই, কারণ দ্ব্যামুষ্যায়ণ

অতিবিক্রপুত্র নহে দ্বাদশপ্রকারপুত্রের অন্তর্গত, কিন্তু পুত্রিকা-করণ নিষিদ্ধ। দুর্ভিক্ষাদিআপৎকালেই পুত্র দান করিতে পারে তদ্ব্যতিরেকে দান করিলে গ্রহীতার পুত্রত্ব সিদ্ধ হইবে বটে কিন্তু তাহাতে দাতার বিধির উল্লঙ্ঘননিমিত্ত প্রত্যবায় জন্মিবে ৪।৪।

পুত্রগ্রহণে বিধবাস্ত্রীর অধিকার নাই ৭।৫। শূদ্রকর্ত্তৃক পুত্রগ্রহণে ব্রাহ্মণদ্বারা হোম কর্ত্তব্য ৯।৮। পতির অনুমতি থাকিলে তাহার মরণের পরও দত্তকাদি গ্রহণ করিতে পারে ৭।৫। পতির জীবদ্দশায় তদনুমতিতে এবং প্রোষিত ও মৃতপতির অনুমতিব্যতিরেকেও স্ত্রীলোক পুত্রদান করিতে পারে ৫৩।১।

পুত্রগ্রহণের কাল পাঁচ বৎসর ৫৮।১১। তাহার মধ্যে অকৃতজাতকর্ম্মাদি পুত্র মুখ্য ৬১।৭ অকৃতচূড় তদপেক্ষা ন্যূন। কৃতচূড়পুত্র যদ্যপি গৃহীত হয় তবে উক্ত পুত্র উভয়ের সম্বিদ্‌ব্যতিরেকেও দ্ব্যামুষ্যায়ণ হইবে ৬০।১০। সম্বিদ্ থাকিলে সকল অবস্থাতেই দ্ব্যামুষ্যায়ণ হইতে পারে। জনক যাহার জাতকর্ম্মাদি চূড়াপর্য্যন্ত সংস্কার করিয়াছে এমন পুত্রকে যদি কেহ বিধানমতে গ্রহণ করে, তথাপি সে গ্রহীতার পুত্র হয় না, দাস হয় ৬২।৪। এবং যাহার বয়ঃক্রম পাঁচ বৎসরের অধিক তাহাকেও যদি গ্রহীতা শাস্ত্রমতে গ্রহণ করে তথাপি সে পুত্র হয় না, দাস হয়। আর যাহার পাঁচ বৎসর উত্তীর্ণ হয় নাই গ্রহীতা যদি তাহার কোন সংস্কার না করে

সেও পুত্র নহে, দাস হয় ৫৪। ৫। দাসপুত্রকে গ্রহীতা ভক্তাচ্ছাদন দিবে এবং তাহার বিবাহ দিবে। বিবাহে গ্রহীতার গোত্রের উল্লেখ হইবে। যাহার চূড়া হইয়াছে তাহাকে গ্রহণ করিতে হইলে পুত্রেষ্টিযাগের আবশ্যকতা হয়। ৫৮। ১১।

ব্রাহ্মণাদি সকলবর্ণ এবং মূর্দ্ধাবসিক্ত অম্বষ্ঠপ্রভৃতিজাতীর পক্ষে সজাতীয়ের পুত্রগ্রহণ শাস্ত্রীয় এবং ভিন্নজাতীয় পুত্রগ্রহণ নিষিদ্ধ। ৪২। ১৪। সপিণ্ডের মধ্যে সমানগোত্র এবং আসন্নসপিণ্ড শ্রেষ্ঠ ২৭। ১। সপিণ্ড সপ্তমপুরুষ পর্য্যন্ত। তদভাবে নিকট ভিন্নগোত্র সপিণ্ড। তাহার অভাবে আসন্ন সকুল্য, সকুল্য দশমপুরুষপর্য্যন্ত। তদভাবে নিকট সোদক, সোদক চতুর্দ্দশপুরুষ পর্য্যন্ত। ২৭। ৬। তদভাবে সগোত্র একবিংশতিপুরুষ পর্য্যন্ত। ২৭। ৮। তদভাবে সজাতীয় সগোত্র। তদভাবে ভিন্নগোত্র ও অসপিণ্ড সজাতীয়। ২৮। ১২। শূদ্রজাতি দৌহিত্র এবং ভাগিনেয়কে দত্তক করিতে পারে; কিন্তু ব্রাহ্মণাদি তিন বর্ণে তাহাদিগকে দত্তক করিতে পারে না ৪৩। ১।

পুত্রগ্রহণস্থলে যাহার মাতাতে নিয়োগ সম্ভব এমন পুত্র গ্রহণ করিতে পারে ৭৩। ৯। অর্থাৎ যে সপিণ্ডাদিপুত্র সম্পর্কে ভ্রাতৃপুত্র হয় তাহাকে লইতে পারে ৭৪। ৮। ভ্রাতা ভগিনীপুত্রকে এবং ভগিনী ভ্রাতৃপুত্রকে গ্রহণ করিতে পারে না ৩১। ১২ গৃহীত হইলে সিদ্ধ নহে। গোত্র আদিপুরুষ ব্রাহ্মণরূপ ক্ষত্রিয়বৈশ্যাদির হনাপি তাদৃশ গোত্র সম্ভব হয় না

তথাপি তাহাদিগের পুরোহিতের গোত্রই গোত্র জানিবে ৪৩।
১১॥ গ্রহীতৃকুলে দত্তকের পিণ্ডদানসম্বন্ধরূপ ত্রৈপুরুষিক সাপিণ্ড্য, অশৌচ ও অবিবাহ্যত্বের কারণ হয়। জনককুলে কেবল অবয়বসম্বন্ধরূপ সাপিণ্ড্য। ১৮। ৫।

। দত্তকাদি প্রতিনিধিপুত্র দুইপ্রকার নিত্যদ্ব্যামুষ্যায়ণ এবং অনিত্যদ্ব্যামুষ্যায়ণ। ৯৯। ৯। জনক যাহার চূড়াপর্য্যন্ত সংস্কার সকল করিয়াছে প্রতিগৃহীতা কেবল উপনয়নাদি সংস্কার করিয়াছে সে অনিত্যদ্ব্যামুষ্যায়ণ ৯৯। ১১। কারণ প্রতিগ্রহীতা জাতকর্ম্ম ও অন্নপ্রাশন প্রভৃতি সমস্ত সংস্কার করিলে তন্মাত্র পুত্র হয় সে দ্ব্যামুষ্যায়ণ পুত্র হয় না এজন্য অনিত্য বলা যায়। 'আমাদিগের উভয়ের এই পুত্র' এমন প্রতিজ্ঞা উভয়ে করিলে সে নিত্যদ্ব্যামুষ্যায়ণ হয় ৯৯। ১০। কারণ প্রতিজ্ঞা থাকিলে দ্ব্যামুষ্যায়ণত্বের ভঙ্গ নাই এজন্য তাহাকে নিত্যদ্ব্যামুষ্যায়ণ কহা যায়। সগোত্রপুত্র পরিগৃহীত হইলেও পরিগ্রহীতার গোত্র তাহার হইবে জনকের গোত্রভাগিতা নাই। ১০১। ৪। গোত্রভাগিতার ফল এই যে সগোত্রত্বপ্রযুক্ত ঐ দত্তক গ্রহীতারই পিণ্ডদানে অধিকারী জনকের গোত্রের সামান্য থাকিলেও ঐ দত্তকের জনকপিণ্ডদানে অধিকার থাকিবে না। দত্তকপুত্র প্রতিগ্রহীতার বেদোক্ত কর্ম্মই করিবে অর্থাৎ যজুর্ব্বেদী যদি সামবেদীর পুত্র গ্রহণ করে সে স্থলে দত্তকের যজুর্ব্বেদোক্ত কর্ম্ম করিতে হইবে সামবেদোক্ত কার্য্য করিবেক না। ১০২। ৩। গ্রহীত্রীমাতার পিতা, পিতামহ ও

প্রপিতামহ শুদ্ধদত্তকের মাতামহ, প্রমাতামহ ও বৃদ্ধপ্রমাতামহ হইবে ১০২। ৮। এবং জননীর ও প্রতিগ্রহীত্রীর পিত্রাদি দ্ব্যামুষ্যায়ণ পুত্রের মাতামহাদি হইবে।

অবিবাহিত ব্যক্তি যদি পুত্র গ্রহণ করে সে স্থলে ঐ দত্তকের মাতামহ পক্ষই নাই। কৃতদারব্যক্তি স্ত্রীবিয়োগ হইলে যদি দত্তক গ্রহণ করে তাহা হইলে ঐ দত্তকের মাতামহাদি ঐ মৃতপত্নীর পিত্রাদি হইবে ১০২। ৮। প্রতিগ্রহীতার কুলদেবতা ও কুলধর্ম্মই দত্তকের জানিবে ১০৩। ৩।

জ্যেষ্ঠবৈমাত্রেয়ভ্রাতৃসত্ত্বে যদি কনিষ্ঠসাপত্ন্যভ্রাতা অগ্রে বিবাহ কিম্বা অগ্নিহোত্রীয় অগ্নি গ্রহণ করে সে স্থলে কনিষ্ঠ পরিবেত্তা, জ্যেষ্ঠ বা পরিবিত্তি হয় না। জনককুলে জ্যেষ্ঠভ্রাতা থাকিতে যদি বয়ঃকনিষ্ঠ দত্তক ঐ প্রকার অগ্রে বিবাহাদি করে তথাপি পরিবেদনাদি দোষ হয় না এবং দেবর হইতে জাত যে ক্ষেত্রজ পুত্র ঐ দেবরের যদি জ্যেষ্ঠ ঔরসপুত্র থাকে, আর ঐ কনিষ্ঠ ক্ষেত্রজভ্রাতা ঐ উভয়কর্ম্ম করে তবে উহাদের উক্ত দোষ হয় না ১০৩। ১০।

প্রতিগ্রহীতৃকুলশ্রাদ্ধীয় সামগ্রী দত্তককে দিবে না, এবং জনককুল ও প্রতিগ্রহীতৃকুলশ্রাদ্ধের দ্রব্য ঐ দ্ব্যামুষ্যায়ণকে অর্পণ করিবে না ১০৪। ১০।

দত্তকাদির মরণে এবং যথাসম্ভব জননে জনককুলে অশৌচ হইবে না। ১১৭। ৯। দত্তকের মরণে এবং দত্তকের পুত্র বা পৌত্র জননে প্রতিগ্রহীতার এবং তাহার পিতা পিতা-

ক্ষেত্রজপুত্র মাতামহের স্বত্তিথিতেও পার্ব্বণ করিতে পারে ১২২। ৯।

ঔরসপুত্র থাকিতে ক্ষেত্রজাদিপুত্রের রাজ্যে অধিকার হয় না, ঔরসপুত্রের অভাবে ক্ষেত্রজাদি ক্রীতপুত্র পর্য্যন্তেরও ক্রমে রাজ্যে অধিকার হয়, কিন্তু পৌনর্ভব, স্বয়ন্দত্ত এবং দাসপুত্রের কদাচ রাজ্যে অধিকার হইবে না, সেস্থলে জ্ঞাতিদিগের রাজ্যে অধিকার হইবে উহারা কেবল গ্রাসাচ্ছাদনমাত্র ভাগী থাকিবে ৫৯। ৪। ঔরসপুত্রসত্ত্বে নির্গুণদত্তকের অধিকার নাই অত্যন্তসগুণদত্তকের অর্দ্ধভাগিতা এবং সামান্যগুণদত্তকের চতুর্থাংশিত্ব। তদভাবে সকল ধনে অধিকার ৭৯। ৭।

দত্তকগ্রহণের পর যদি ঔরসপুত্র জন্মে, তাহা হইলে দত্তকপুত্র ঔরস হইতে চতুর্থাংশগ্রহণ করিবে ঔরসাদি না থাকিলে সকল ধনে অধিকারী হইবে ইতি। ১২৪। ১।

# दत्तकचन्द्रिका ।



महामहोपाध्यायकुवेरविरचिता-

गवर्णमेण्ट-संस्कृतविद्यालयस्य भूतपूर्व्वस्मृतिशास्त्राध्यापक-

श्रीभरतचन्द्रशिरोमणिभट्टाचार्य्यकृत-

बालसंबोधनी-टीकासहिता

श्रीयज्ञेश्वरभट्टाचार्य्येण

सम्वर्द्धिता पुनर्मुद्रिता च ।

शकाब्दाः १८०७ ।

# दत्तकचन्द्रिका ।



बालसम्बोधनीटीकासहिता ।



चन्द्रिकानुकसञ्जातसंशयध्वान्तचन्द्रिका ।
चन्द्रिकालानुभावेन कृता दत्तकचन्द्रिका ॥

---

यः सृष्टिस्थितिभङ्गरङ्गवकलैर्दीव्यत्यजस्रं जगत्
योऽमूर्त्तो धरणीं बिभर्त्ति सततो मीनादिमूर्त्तिं दधत् ।
यो वेदान् कृपया ररक्ष जलधौ मग्नान् कृतूनां कृते
तस्मै वेदविधानसिद्धिनिधये रामाय नित्यं नमः ॥

रामचन्द्रपदद्वन्द्वं प्रणिपत्य यथाविधि ।
बालसम्बोधनीटीका भरतेन वितन्यते ॥

ग्रन्थारम्भे प्रारिप्सितग्रन्थसमाप्तिकामनया शिष्टाचारप्राप्तं देवता-नामोच्चारणरूपं मङ्गलमाचरन् दत्तकचन्द्रिकामुद्दिशति चन्द्रिकेति । चन्द्रिकायां प्रकाशिकायां ग्रन्थरूपायां अनुक्तेन अनुमता भवितव्या, यः संशयरूपो ध्वान्तोऽन्धकारस्तस्य चन्द्रिका प्रकाशिका इत्यर्थः । यथा शुक्लादिन्दुरित्यत्र शुक्ले अमात्वं व्यक्तं तथा चन्द्रिकापदस्यामुष्य दत्तके चन्द्रत्वं व्यक्तमिति । चन्द्रेति चन्द्रो विद्यतेऽस्य चन्द्री, कस्मात् स्पष्टत-यात् ताम्, चन्द्री चासौ कान्ताचेति चन्द्रिका तो गदादिवकत्वानुभावेन

मन्वादिवाक्यविहतेषु विवादमाग-
स्वष्टादशस्वपि मया स्मृतिचन्द्रिकायाम्।
फल्गुकृदत्तकविधिर्न विविचितो यः
सर्व्वः स चात्र विततो विहतो विशेषात्॥

तत्राह मनुः। अपुत्त्रेण सुतः कार्य्यो यादृक् तादृक् प्रयत्नतः। पिण्डोदकक्रियाहेतोर्नामसंकीर्त्तनाय च।

अत्रिश्च। अपुत्त्रेणैव कर्त्तव्यः पुत्त्रप्रतिनिधिः सदा। पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात् प्रयत्नतः। 'अपुत्त्रेण' अजातपुत्त्रेण मृतपुत्त्रेण वा। अपुत्त्रो मृतपुत्त्रो वा पुत्त्रार्थं समुपोष्य चेति

---

सन्माहात्म्येनेत्यर्थः। अनेन देवतानामोच्चारणरूपं मङ्गलमविहितम्। चन्द्रिकानुप्रभावेणेतिपाठे चन्द्रिकायाः स्मृतिचन्द्रिकायाः अनुप्रभावेण सद्ग्रन्थालोचनाप्रसादगुणेन जातया ग्रन्थजनिकया शक्त्या इत्यर्थः। अत्रापि ग्रन्थस्यापि देवतारूपत्वात् तन्नामोत्कीर्त्तनरूपं मङ्गलं जनितमिति बोध्यम्। 'दत्तकचन्द्रिका' दत्तकस्य चन्द्रिका, यथा अन्धकारलीनाः पदार्थाः अध्यक्षेण स्वतो न प्रतिभासन्ते चन्द्रिकया प्रत्यक्षीभवन्ति एवं दत्तकविषयाः पदार्था अन्यतो न प्रतिभासन्ते दत्तकचन्द्रिकयैव प्रत्यक्षी भवन्तीति भावः।

मन्वादीति। मन्वादिवाक्येन तेषामाद्यमृणादानमित्यादिवाक्येन विहतेषु विवादमार्गेषु विवादविषयेषु अष्टादशसंख्यातेषु पासन्यष्टादशैतानि व्यवहारस्थितानिह इत्यादिमनोक्तेषु स्मृतिचन्द्रिकाया फल्गुकदत्तकविधिर्यो न विवेचित' चन्द्रिकाकारैर्विशेषत इति शेषः स सर्व्वो विधिर्मन्वादिषु विततो विस्तृत एवास्ति मया विहतः कथयितुमारब्ध' विशेषात् यथार्थमीमांसया इत्यर्थः।

शौनकसंवादात्। तेन पुत्रोत्पत्त्या ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः। पितॄणामनृणश्चैव स तस्मात्सर्वमर्हतीति मनुवचनावगतऋणपरीहारेऽपि तत्पुत्रमरणे पिण्डोदकार्थं पुनः पुत्रकरणमावश्यकम्। अत्र पुत्रपदं पौत्रप्रपौत्रयोरप्युपलक्षणम्। तयोरपि पिण्डदातृत्ववंशकरत्वाविशेषात्। अन्यथा सत्यपि पौत्रे मृतपुत्रस्य निर्निमित्तपुत्रपरिग्रहापत्तिः। अतः पुत्रपौत्रप्रपौत्ररहितस्यैव पुत्रीकरणमवगम्यते। अपुत्रेणेत्यत्र पुंस्त्वैकत्वयोर्विधेयविशेषणतया विवक्षितत्वम्, तेन द्वाभ्यां त्रिभिर्व्वा नैकः प्रतिग्राह्य इति तु न देश्यं द्व्यामुष्यायणस्य द्वाभ्यां परिग्रहस्य वक्ष्यमाणत्वात् स्त्रियाश्च भर्त्तुरनुज्ञया तदधिकारात्। यथाह वशिष्ठः। न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्त्तुरिति।

प्रतिनिधिरिति। स च क्षेत्रजादिरेकादशविधः। यथा मनुः।

---

तेनेति। अजातपुत्रमृतपुत्रायां पुत्रपदस्याचरणस्य प्राक्तोपत्वेन इत्यर्थः। मनुवचनेति।—तथाच जातमात्रेणेति स्वरसात् जन्मानन्तरं मरणेऽपि तेनैव देवादीनामृणपरिहारस्य जातत्वादित्यभिप्रायः। तयोरपीति। पुत्रः पौत्रः प्रपौत्रो वेत्यादिवचनात् लोकानन्त्यं दिवः प्राप्तिरितिवचनाच्चेति भावः। विधेयेति।—अपुत्रकर्त्तृकपुत्रप्रतिनिधौ विधेये पुंस्त्वस्य विशेषणत्वस्याप्यसम्भवादित्यर्थः। ननु अपुत्रेण इतः कार्य्यं इत्यत्र पुंस्त्वैकत्वयोर्विवक्षितत्वेन द्वयोः स्त्रीणाञ्च पुत्रग्रहणं माभूदित्यत आह अपुत्रेणेत्यत्रेति। तथाचात्र पुंस्त्वैकत्वयोरुद्देश्यगतत्वेनाविवक्षितत्वमिति भावः। अथवा पुंस्त्वैकत्वयोर्विधेयविशेषणत्वेऽपि द्वाभ्यां स्त्रीभिश्च पुत्रग्रहणं बाधनीयमिति भावः।

क्षेत्रजादीन् सुतानेतानेकादश यथोदितान्। पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः॥ बृहस्पतिः। पुत्रास्त्रयोदश प्रोक्ता मनुना येऽनुपूर्व्वशः। सन्तानकारणन्तेषामौरसः पुत्रिका तथा। आज्यं विना यथा तैलं सद्भिः प्रतिनिधीकृतम्। तथैकादश पुत्रास्तु पुत्रिकौरसयोर्विना॥ तथापि कलौ न सर्व्वेषामभ्यनुज्ञानम्। अनेकधा कृताः पुत्रा ऋषिभिर्ये पुरातनैः। न शक्यन्तेऽधुना कर्त्तुं शक्तिहीनैरिदन्तनैरिति वचनात्। दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रह इत्याद्यभिधाय इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिण इति दत्तकेतरप्रतिनिधिनिषेधात् अतो दत्तकविधिर्विवच्यते॥

तत्र शौनकः। ब्राह्मणानां सपिण्डेषु कर्त्तव्यः पुत्रसंग्रहः। तदभावेऽसपिण्डे वा अन्यत्र तु न कारयेत्। सपिण्डेष्विति सामान्यश्रवणात् समानासमानगोत्रेष्वित्यर्थः।

तथाच सपिण्डाभावे असपिण्डः सगोत्रस्तदभावे भिन्नगोत्रो-

---

प्रतिनिधिरितीति। अपुत्रेणैव कर्त्तव्य इत्यत्र इति शेषः। क्रियालोपादिति।—प्रतिनिध्यकरणे क्रियालोपादित्यर्थः। सन्तानकारणमिति।—एतेषु औरसपुत्रिकयोः प्राशस्त्यार्थमुक्तं क्षेत्रजादीनामपि सन्तानकारणत्वस्याव्यभिचारादिति। ननु क्षेत्रजादय एकादशपुत्रप्रतिनिधयः सन्ति प्रतिपाद्यास्तेषां विधिविशेषमं हित्वा किमिति प्रत्युपादानविधिरिवानेन दत्तकविधिमेव वक्तुमारभते इत्यत आह तथापीति।

सपिण्डाभावे इति। सगोत्रभिन्नगोत्रसपिण्डाभाव इत्यर्थः। औरस-

ऽपि ग्राह्य इत्याह शाकलः। सपिण्डापत्यकञ्चैव सगोत्रजमथापि वा। अपुत्त्रको द्विजो यस्मात् पुत्त्रत्वे परिकल्पयेत्। समानगोत्रजाभावे पालयेदन्यगोत्रजम्। दौहित्रं भागिनेयञ्च मातृस्वसृसुतं विना इति। अन्यत्र तु न कारयेदिति ब्राह्मणातिरिक्तः क्षत्रियादिरसमानजातीयो दत्तको व्यावर्त्त्यते।

यदाह मनुः। माता पिता वा दद्यातां यमद्भिः पुत्त्रमापदि। सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः॥ आपदि पुत्त्रप्रतिग्रहीतुरपुत्त्रत्वे। 'सदृशं' सजातीयम्। यत्तु सदृशं न जातितः किन्तु कुलानुरूपैर्गुणैस्तेन क्षत्रियादिरपि ब्राह्मणस्य पुत्त्रो युज्यते इति मेधातिथिव्याख्यानम्। तत्रायमभिसन्धिः औरसासत्त्वे क्षत्रियादेरसमानजातीयतया पिण्डोदकाद्यनर्हत्वेऽपि नामसंकीर्त्तनादिप्रयोजनकतया पुत्त्रत्वमुत्पद्यत एव शास्त्रीयत्वात् परन्त्वल्पोपकारतया ग्रासाच्छादनमात्रभागित्वं, यदाह कात्यायनः। असवर्णास्तु ग्रासाच्छादनभागिन इति।

तथा शौनकः। यदि स्यादन्यजातीयो गृहीतोऽपि सुतः क्वचित्। अंशभाजं न तं कुर्य्याच्छौनकस्य मतं हि तत्॥ याज्ञवल्क्योऽपि। सजातीयस्य पिण्डदातृत्वांशहरत्वे विहिते नतु विजातीयस्य पुत्त्रत्वं निषिद्धम्।

व्यक्तमाह वृद्धयाज्ञवल्क्यः। सजातीयः सुतो ग्राह्यः पिण्डदाता

---

सांसत्वे इति। सजातीयपुत्त्राभावे इति शेषः तदभावेऽसजातीय इति वचनात्। परत्र परवचने मनोरिति शेषः। वचनन्तु श्रेयसः श्रेयसोऽभावे पापीयान्रिक्थमर्हति। बहवश्चेत्तु सदृशाः सर्व्वे रिक्थस्य भागिन

स रिक्थभाक्। तदभावे विजातीयो वंशमात्रकरः सूनः ग्रासाच्छादनमात्रन्तु स लभेत तद्धनिन इति। वस्तुतस्तु मनुवचने सदृशपदस्य सजातीयार्थकतैव युक्ता, परन्तु तादृशदत्तकस्य विभागदर्शनात् असवर्णस्य च विभागासम्भवात्। दौहित्रो भागिनेयश्चेति दौहित्रभागिनेयनिषेधः शूद्रातिरिक्तविषयः।

तथाच शौनकः। क्षत्रियाणां सजातौ च गुरुगोत्रसमेऽपि वा। वैश्यानां वैश्यजातिषु शूद्राणां शूद्रजातिषु। सर्व्वेषामेव वर्णानां जातिष्वेव न चान्यतः। दौहित्रो भागिनेयश्च शूद्रैस्तु क्रियते सुतः। ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित्। गुरुगोत्रसमेऽपि वेति क्षत्रियाणां प्रातिस्विकगोत्राभावात् गुरुगोत्रनिर्द्देशः पौरोहित्यान् राजन्यविशां प्रवृणीतेति सूत्रेण तस्य पुरोहितगोत्रभागित्वोक्तेः। जातिष्वेव न चान्यत इति नियमः सजातीयसम्भवे विजातीयनिषेधार्थः, अन्यथा प्रागुक्तकात्यायनविरोधः स्यात्।

तत्रापि सन्निहितसपिण्डेषु सति भ्रातृसुते स एव पुत्रीकार्य्य इत्याह मनुः। सर्व्वेषामेकजातानामेकश्चेत् पुत्रवान् भवेत्। सर्व्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत्।

---

इति। असवर्णस्य चेति।—विभागासम्भवादिति।—असवर्णास्तु ग्रासाच्छादनभागिन इति वचने ग्रासाच्छादनविधानेन भागस्य निषेधादिति भावः। अन्यथेति।—असवर्णास्तु ग्रासाच्छादनभागिनः इति कात्यायनवचनविरोध इत्यर्थः। इदमुपलक्षणं सजातीयः सुतो ग्राह्य

बृहस्पतिः। यद्येकजाता बहवो भ्रातरश्च सहोदराः। एकस्यापि सुते जाते सर्व्वे ते पुत्त्रिणः स्मृता इति। अत्र वचनद्वयेऽपि भ्रातृसुते च पुत्त्रप्रतिनिधितया कथञ्चित् सम्भवति अन्यो न प्रतिनिधिः कार्य्य इत्यवगम्यते। न चापत्यमुत्पादयितव्यमिति नित्यो ह्ययं विधिः स यथाकथञ्चित् पालनीयस्तत्र भ्रातृव्ये पुत्त्रातिदेशेन तत्फलस्य पिण्डोदकादेरलोकतापरीहारस्य च सिद्धत्वेन न पुनस्तत्र प्रवृत्तिरत एवाकृतस्यैव भ्रातृपुत्त्रस्य पुत्त्रत्वम्। अपुत्त्रस्य पितृव्यस्य तत्पुत्त्रो भ्रातृजो भवेत्। स एव तस्य कुर्व्वीत श्राद्धपिण्डोदकक्रियामिति वृहत्पराशरस्मरणात्। तस्मिन् सति तु न दत्तकाद्युपादानमिति वाच्यम्। भ्रातृव्यस्य पुत्त्रातिदेशेनालोकतापरीहारादिसाधकत्वेऽपि नामसंकीर्त्तनोचितवंशकरत्वानुपपत्त्या तदर्थं तदुपादानस्यावश्यकत्वात्। किञ्च इदं हि वचनद्वयं सति भ्रातृपुत्त्रे न दत्तकाद्युपादाननिषेधकं परन्तु श्राद्धादिकर्त्तृत्वरूपपुत्त्रधर्म्मातिदेशकं, अन्यथा सत्यपि भ्रातृपुत्त्रे चेत्तजपुत्त्रोत्पादनविधिविरोधापत्तेः। अकृता वा कृता वापि यं विन्देत् सदृशात् सुतम्। पौत्त्री मातामहस्तेन दद्यात् पिण्डं हरेद्धनमिति वचने दौहित्रेऽपि पौत्त्रातिदेशसत्त्वात् दौहित्रसत्त्वेऽपि प्रागुक्तयुक्त्या दत्तकाद्यनुपादानप्रसङ्गाच्च।

---

पिण्डदाता स रिक्थभाक् तदभावे विजातीयो वंशमात्रचारः सूत इत्यादि याज्ञवल्क्यवचनविरोधोऽपि द्रष्टव्य इति।

मनुबृहस्पतिवचनद्वयस्य यथाश्रुतार्थमादाय भ्रातृपुत्त्रस्याकृतत्वेऽपि पुत्त्रत्वं भवतीति केषाञ्चिन्मतं तद्दूषयति अत्र वचनद्वयेऽपीति।

ननु सत्यपि भ्रातृपुत्त्रे दत्तकाद्युपादानस्य शास्त्रीयत्वे वक्ष्यमाणवचनैः मृतपत्नीकानामेकपत्नीनामेव एव विधिः स्मृत इति वृहस्पतिवचने सर्व्वासामेकपत्नीनामेका चेत् पुत्त्रिणी भवेत् सर्व्वास्तास्तेन पुत्त्रेण प्राह पुत्त्रवतीर्म्मनुरिति मनुवचने च सपत्नीपुत्त्रे पुत्त्रधर्म्मातिदेशेन सत्यपि तस्मिन् दत्तकाद्युपादानमस्त्विति चेन्न, यथा तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा भवति वाजिभ्यो वाजिनमित्यत्रामिक्षार्थं प्रवृत्तस्योद्देश्यीभूतामिक्षापवारे आमिक्षा पुरुषं प्रवर्त्तयति नतु वाजिनं अनुद्देश्यत्वेनाप्रयोजकत्वात् यथा वा पितुः क्षयाहे पित्रादित्रिकस्य पार्व्वणे कृते मातामहादिश्राद्धाय न पुनः पार्व्वणारम्भः तस्य पितृश्राद्धाधीनप्रवृत्तेः तथात्रापि भर्त्तुरनुज्ञाशास्त्रेण तत्पुत्त्रोपादानाय प्रवृत्तायास्तत्पुत्त्राभाव एव तदुपादानं नतु तत्पुत्त्रानपवारेऽपि स्वपुत्त्रापवारे तदुपादानं तत्प्रवृत्तेरप्रयोजकत्वात् तत्रालोकतापरीहारोऽस्या न स्यादित्यपेक्षायां मनुवृहस्पतिवचनद्वयं सपत्नीपुत्त्रे पुत्त्रातिदेशेनालोकतापरीहारश्राद्धोपपादकं

---

सत्यपि भ्रातृपुत्त्रे इति। यस्तल्पजः प्रमीतस्य क्लीवस्य व्याधितस्य वा। स्वधर्म्मेण नियुक्तायां स पुत्त्रः क्षेत्रजः स्मृत इति मनुवचनादिति शेषः। आमिक्षेति।—आमिक्षा संसृष्टदधिपयोरूपा, 'वाजिनं' तदवशिष्टं जलम्। यथा वेति।—अमावास्यां क्षयो यस्य प्रेतपक्षेऽथवा पुनः। सपिण्डीकरणादूर्द्ध्वं तस्योक्तः पार्व्वणो विधिरिति वचनात्। पितृश्राद्धेति।—पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवमिति वचनात्। भर्त्तुरिति। न स्त्री पुत्त्रं दद्यात् प्रतिगृह्णीयाद्वेति शास्त्रमित्यर्थः। तत्प्रवृत्तेः तस्याः प्रवृत्तेरित्यर्थः। यस्या अपुत्त्रसपत्न्या

भर्त्तृवंशमन्तरेण चाथा वंशान्तरासम्भवेन तस्यैव स्ववंशकर्त्तृत्वं चेत्तत: समस्तस्यापि पुत्त्रप्रयोजनस्य सम्भवेन सति सपत्नीपुत्त्रे न दत्तकाद्युपादानं भ्रातृपुत्त्रस्य तु वंशकरत्वाभावेन सत्यपि तस्मिन्नु पादीयन्ते दत्तकादय इत्येतावान् परं विशेष:।

ननु सति भ्रातृसुते तस्यैव पुत्त्रीकरणावश्यम्भावे यत्रैक एव भ्रातृपुत्त्रस्तत्रैव तदसम्भव:। नत्वेक पुत्त्र दद्यात् प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्व्वेषामिति वशिष्ठस्मरणादिति चेन्न, एतस्य द्व्यामुष्यायणेतरविषये सावकाशत्वात् द्व्यामुष्यायणे च हेतुवन्निगददर्शितसन्ततिविच्छेदाभावात् वेतालस्य च भैरवपुत्त्रपुत्त्रीकरणे पौराणिकलिङ्गदर्शनाच्च। यथा। तत: कदाचिदुर्व्वश्यां भैरवो मैथुनं गत:। तस्यां स जनयामास सुवेश नाम पुत्त्रकम्। तमेव चक्रे तनयं वेतालोऽपि स्वक सुतम्। ततस्तौ तेन पुत्त्रेण स्वर्ग्यां गतिमवापतुरिति।

केन पुत्त्रो देय इत्याह शौनक। नैकपुत्त्रेण कर्त्तव्यं पुत्त्रदानं कदाचन। बहुपुत्त्रेण कर्त्तव्यं पुत्त्रदानं प्रयत्नत इति। हि-

---

इत्यर्थ:। हेतुवदिति।—'हेतुवन्निगद' सहेतुक वचनम्। यस्मिं वर्त्तेत स हि चायतेत्यपि। यथैतद्दाता। यत्र व्याहृतेत्यादिलक्षणात् व्याहृतेत्यादिना यथैर्दैवतात्वं अन्यथा तद्वचनवैयर्थ्यं स्यादित्यत सर्वं प्रतीयमर्थेनोपपत्तेरिति। यदमाभय स हि व्याहृतेत्य इति हेतुवन्निगद: तस्य प्रतीयमानार्थेनैवोपपत्ते। अभियोगे भवतीति प्रत्यर्थं यदि लौकिक इति।

तदनुमताविति।—भर्त्तु: प्रधान्यादिति। अनुमतिश्चेति।—तदाच तदत्यसमवे पुत्त्रं मा दद्यास्त्वमीति प्रतिषेधाभावेऽपि अनुमति

पुत्रस्यापि पुत्रदाने अपरपुत्त्रनाशे वंशविच्छेदमाशङ्क्याह बहुपुत्त्रेणेति। स्त्रियास्तु जीवति भर्त्तरि तदनुमतौ प्रोषिते मृते वा तदनुज्ञां विनापि। यथा वशिष्ठः। न स्त्री पुत्त्रं दद्यात् प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्त्तुरिति। अनुमतिश्च अप्रतिषेधेऽपि भवति अप्रतिषिद्धं परमतमनुमतं भवतीति न्यायात्। निरपेक्षदानमाह याज्ञवल्क्यः। दद्यान्माता पिता वा यं स पुत्त्रो दत्तको भवेत्। तथा। मातापितृभ्यामुत्सृष्टस्तयोरन्यतरेण वेति।

अथ पुत्त्रपरिग्रहविधिमाह शौनकः। शौनकोऽहं प्रवक्ष्यामि पुत्त्रसंग्रहमुत्तमम्। अपुत्त्रो मृतपुत्त्रो वा पुत्त्रार्थं समुपोष्य च। 'संग्रहं' संग्रहणविधिम्। 'उपोष्य' ग्रहणात् पूर्व्वदिने कृतोपवासः। … वाससी कुण्डले दत्त्वा उष्णीषञ्चाङ्गुलीयकम्। आचार्य्यं धर्मसंयुक्तं वैष्णवं वेदपारगम्। मधुपर्केण सम्पूज्य राजानञ्च द्विजान् शुचीन्॥ राज्ञो विप्रकृष्टत्वे ग्रामस्वामिनम्, बन्धूनाहूय सर्व्वांस्तु ग्रामस्वामिनमेव चेति स्मरणात्। द्विजानिति बहुत्वं त्रित्वपर्य्यवसितं कपिञ्जलन्यायात्। द्विजानां पूजनं याच-

---

रविप्रतिपत्त्येति मन्यहलालाभयः। निरपेक्षदानमिति।—भर्त्तुरनुमतिनिरपेक्षं यथा। अपि भर्त्तनुमतिनिरपेक्षं दानमित्यर्थः।

संग्रहमिति। संगृह्यते अनेनेति व्युत्पत्तेरिति भावः। विप्रकृष्टत्व इति।—विप्रकर्षो द्विविधः मात्या देशेन च। कपिञ्जलन्यायादिति।—कपिञ्जलानालभेतेति श्रुतिः। तत्र कपिञ्जलगतं बहुत्वं बोधितं बहुत्वस्य विधेयविशेषणत्वात् अनर्पितकपञ्जलसंख्या विधेयतया प्रमाणान्तरेण बहुत्वस्याप्राप्तत्वात् त्रित्वमारभ्य परार्द्धमिति चेत्

नार्थम्। बर्हिः कुशमयञ्चैव पालाशं चेध्ममेव च। एतानाहृत्य बन्धूंश्च ज्ञातीनाहूय यत्नतः॥ बन्धूनन्नेन सम्भोज्य ब्राह्मणांश्च विशेषतः। अन्याधानादिकं तत्र कृत्वाज्योत्पवनान्तकम्॥ दातुः समक्षं गत्वा च पुत्रं देहीति याचयेत्। दाने समर्थो दातासौ यो यज्ञेनेति पञ्चभिः॥ दद्यादिति शेषः। 'बन्धून्' आत्ममातृपितृबन्धून्। 'ज्ञातीन्' सपिण्डान्। तदाह्वानं दृष्टार्थम्। बन्धूनाहूतान्। ब्राह्मणान् पूर्व्वहूतान्। चकारात् चाहूतान् ज्ञातींश्च सम्भोज्येत्यर्थः। तथा देवस्त्वेति मन्त्रेण हस्ताभ्यां परिगृह्य च। अङ्गादङ्गेत्यृचं जप्त्वा आघ्राय शिशुमूर्द्धनि। वस्त्रादिभिरलङ्कृत्य पुत्रच्छायावहं सुतम्॥ 'पुत्रच्छाया' पुत्रसादृश्यं नियोगादिना स्वयमुत्पादनयोग्यत्वमिति यावत्। तथा—नृत्यगीतैश्च वाद्यैश्च स्वस्तिशब्दैश्च संयुतम्। गृहमध्ये तमाधाय चरुं कृत्वा विधानतः॥ यस्त्वाहृदेत्यृचा चैव तुभ्यमग्रेत्यृचैकया। सोमो ददद्दित्येताभिः प्रत्यृचं पञ्चभिस्तथेति॥

---

अगत्यवसायिनाप्यत्र्या तद्देशाभावात्यपत्तिरिति सूक्ष्मं कृतम्। अस्यार्थः। तद्देशस्य कपिञ्जलालम्भेनैवैतत्सुतपस्य वेदस्य यथा-माख्यापत्तिः अननुष्ठानलक्षणाप्रामाण्यापत्तिरित्यर्थः। अत्र सूत्रा-न्तरम्। प्रथमोपस्थितेस्त्र्यल्पादिति। त्रित्वस्य प्रथमोपस्थितत्वात् त्रित्वमिति कपिञ्जलालम्भेनेति वेदबोध्यमिति। 'कपिञ्जलो' जल-चरपक्षिविशेषः। दाने समर्थ इति।—दानकालमध्ये बहुपुत्रवादिना इत्यर्थः। दृष्टार्थमिति। तेन तदाह्वानं विना न व्यवहारसिद्धि-रिति भावः। चकारादिति। ब्राह्मणांश्च विशेषत इति वचनस्थात्

वृद्धगौतमः। पायसं तत्र साज्यञ्च शतसङ्ख्यञ्च होमयेत्। प्रजापते न त्वदेतामित्युद्दिश्य प्रजापतिमिति॥

वशिष्ठः। पुत्त्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजनि निवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा अदूरबान्धवं बन्धुसन्निकृष्टमेव गृह्णीयात्। सन्देहे चोत्पन्ने दूरबान्धवं शूद्रमिव स्थापयेत् विज्ञायते ह्येकेन बहूंस्त्रायते इति। 'निवेशनं' गृहम्। सन्देहे इति दूरावस्थितबान्धवस्य अत्यन्तदेशभाषाविप्रकर्षादिना कुलशीलादिसन्देहो भवत्येव। तथात्वे तन्निर्णयपर्य्यन्तं न व्यवहरेत्, तत्र हेतुरेकेनेति। बहून् पित्रादीन्। एतदन्यतरविधिरावश्यकः।

ततश्च शौनकः। दक्षिणां गुरवे दद्यात् यथाशक्ति द्विजोत्तमः। नृपो राज्यार्द्धमेवाथ वैश्यो वित्तशतत्रयम्। शूद्रः सर्व्वस्वमेवापि अशक्तश्चेद्यथाबलम्। 'राज्यार्द्धं' अर्द्धराज्योत्पन्नमेकवर्षीयद्रव्यं, प्रदद्यादर्द्धराज्योत्थमेकवर्षार्ज्जितं धनमिति वृद्धगौतमस्मरणात्। उत्तममध्यमाधमभेदेन वित्तानां सुवर्णरजतताम्राणामिति ज्ञेयम्। शतत्रयं माषकाणां सौवर्णमथ राजतम्। प्रदद्यात् ताम्रमथवा उत्तमादिव्यवस्थयेति वृद्धगौतमस्मरणात्॥ 'सर्व्वस्वं' एकवर्षभृतिलब्धमिति यावत्।

तैत्तिरीयाणान्तु विधिविशेषमाह बौधायनः। अथ पुत्त्रपरि-

---

अपकारादित्यर्थः। श्लोकेन विज्ञातेनेत्यर्थः। बहूनिति। त्रायते प्रतिग्रहीता, इत्यर्थः। त्रायत इति कर्त्तरि लट् त्रैङ पालने इत्यस्मा-त्मनेपदाभिव्यक्तिः। माषकाणामिति। मुद्राचिह्नितनिष्काणामित्यर्थः।

ग्रहविधिं व्याख्यास्यामः। प्रतिग्रहीष्यन्नुपकल्पयते द्वे वाससी द्वे कुण्डले अङ्गुलीयकं आचार्य्यञ्च वेदपारगं, कुशमयं बर्हिः पर्ण मयमिध्ममित्यथ वन्धूनाहूय निवेशनस्य मध्ये राजनि निवेद्य परिषदि वागारमध्ये ब्राह्मणवागालम्बेन उपविश्य पुरुषाहं स्वस्ति ऋद्धिमिति वाचयित्वा यद्देवयजनोल्लेखप्रभृति आप्रणीताभ्यः कृत्वा दातुः समक्षं गत्वा मे पुत्रं देहीति भिक्षेत। ददामीतीतर आह। तं परिगृह्णाति धर्म्माय त्वा परिगृह्णामि सन्तत्यै त्वा परिगृह्णामि इत्यथैनं वस्त्रकुण्डलादिभिरलङ्कृत्य परिधानप्रभृत्यग्निमुख कृत्वा पक्त्वा जुहोति, यस्त्वाहृदाकीरिणामन्यमान इति पुरोऽनुवाक्यमनुच्य यस्मैत्वं सुकृते जातवेद इति याज्यया जुहोत्यथ व्याहृतीर्हुत्वा स्विष्टकृत्प्रभृतिसिद्धमाधेनुवरप्रदानदक्षिणां ददाति, एते च वाससी, एते कुण्डले एतचाङ्गुरीयकं च एवं त्वौरस उत्पन्ने तुरीयभागे सम्भवतीति, आह स्म बौधायन इति॥ एवमुक्तविध्यभावे परिगृहीतस्य तु विवाहोचितधनमात्रभागित्वं नत्वंशभागित्वमिति वक्ष्यते।

तथा मनुः। गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमः सुतः। गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधेति। एतेन दातृधने दानादेव पुत्रत्वनिवृत्तिद्वारा दक्षिणस्य स्वत्वनिवृत्तिर्द्दातृगोत्र-

---

गोत्ररिक्थ इति। अत्र जनयितुर्गोत्ररिक्थप्राप्तिहेतुत्वेन तत्प्राद्धकर्तृत्वेन च प्रतिग्रहीतुर्गोत्ररिक्थहारित्वं प्रतीयते। स्वधेति।— स्वधा श्राद्धं स्वधा वै पितृयानमन्नमितिश्रुतेः। ननु गोत्ररिक्थपिण्डानां निश्चया तत्कृतसंस्कारस्यापि निवृत्तिरुचिता इत्या

निवृत्तिश्च भवतीत्युच्यते। तथा च गोत्रादिनिवृत्तेरेव दर्शनात् संस्कुर्य्यात् स्वसुतान् पितेति स्मरणात् ग्रहणानन्तरसम्भाव्यमाना एव दत्तकस्य संस्कारा प्रतिग्रहीत्रा कार्य्या न पुनर्जनकेन कृत पूर्व्वा अपि निवर्त्तनीया। एवमेन शम जाति वीजगर्भसमुद्भव मिति। चित्र कर्म्म यथानेकैरङ्गैरुन्मील्यते शनैः। ब्राह्मण्यमपि तद्वत् स्यात् संस्कारैर्व्विधिपूर्व्वकैरिति वचनबोधितस्य तत्तत्क्रियाता वीजादिदोषनाशस्य ब्राह्मण्याधानस्य च जातत्वेन तदावृत्तौ प्रमा णाभावात्। अन्यथा अष्टौ संस्कारकर्म्माणि गर्भाधानमिव स्वयम्। पिता कुर्य्यात्तदन्यो वा तस्याभावेऽपि तत्क्रमादित्यनेन पुंसवन सीमन्तोन्नयनयोरपि करणापत्तेः। तच्चायुक्तं अप्रामाणिक त्वात्। किञ्च ग्रहणानन्तरमेव पितृत्वेन संस्काराधिकारात् तत् पूर्व्वभाविषु संस्कारेषु प्रतिग्रहीतुरनधिकार एवायाति काला-

---

अङ्काह गोत्रादिनिवृत्तेरेवेति। ग्रहणानन्तरमिति।—तथाच ग्रह णानन्तरं तस्य पुत्रत्वादित्यभिप्रायः। अत्र हेतु प्रदर्शयति एवमेन इति।—एव उक्तप्रकारगर्भाधानादिभि ‘एनः पाप ‘वीजगर्भसमुद्भव’ शुक्रशोणितसम्बन्ध गात्रव्याधिसङ्क्रान्तिनिमित्त, ‘शम नाश याती त्यर्थः। अष्टाविति।—अष्टौ संस्कारकर्म्माणि। गर्भाधानमृतौ पुंस वनं स्पन्दनात् पुरा। षष्ठेऽष्टमे वा सीमन्त प्रसवे जातकर्म्म च। अहन्येकादशे नाम चतुर्थे मासि निष्क्रम। षष्ठेऽन्नप्राशनं मासि चूड़ा कार्य्या यथाकुलमिति याज्ञवल्क्योक्तानि इत्यर्थः। ‘तत्क्रमात्’ संस्कार्य्यक्रमात्। तथाच पितृभिन्नेन संस्कारकर्त्रा संस्कार्य्यपिता दीनां मातामहादीनाञ्च देवतात्वमिति भावः। तत्पूर्व्वेति।—ग्रहणात

भावात्। यदि च तत्पूर्व्वभाविनोऽपि संस्कारा जनकेन न कृतास्तदा बीजगर्भदोषनाशावश्यकत्वेन क्रमानुरोधेन च प्रतिग्रहीत्रैव ते समाधेयाः। एवञ्च उपनयनमात्रकरणेऽपि प्रतिग्रहीतुर्दत्तकपुत्त्रसिद्धिः। अन्यशाखोद्भवो दत्तः पुत्त्रश्चैवोपनायितः। स्वगोत्रेण स्वशाखोक्तविधिना स स्वशाखभागिति वशिष्ठस्मरणात्। एतच्चाष्टमाब्दरूपतन्मुख्यकालाभ्यन्तरवर्त्तिपरिग्रहे बोध्यं, अन्यथा मुख्यकालेऽधिकारयोग्यत्वाभावे गौणकाले अनधिकारान्न तत्सिद्धिरिति।

अत्र च जनकप्रतिग्रहीत्रोरुभयोरपि पुत्त्राभिसन्धाने सति दत्तकस्य द्व्यामुष्यायणत्वेनोभयगोत्रभागित्वम्। विशेषो वक्ष्यते। यत्तु पुराणान्तरे पठन्ति "पितुर्गोत्रेण यः पुत्त्रः संस्कृतः पृथिवीपते। आचूडान्तं न पुत्त्रः स पुत्त्रतां याति चान्यतः। चूड़ाद्या यदि संस्कारा निजगोत्रेण वै कृताः। दत्ताद्यास्तनयास्ते

---

पूर्व्वभाविन इत्यर्थः। तथाच यदि तृतीयवर्षीयो गृहीत स्यात् जनकेन तस्य जातकर्म्मादिसंस्कारा न कृतास्तदा ते प्रतिग्रहित्रा समाधेया इत्यर्थः। क्रमानुरोधेन चेति।—येषान्तु न कृता पित्रा संस्कारविधयः क्रमात्। कर्त्तव्या भ्रातृभिस्तेषां पैतृकादेव तद्धनादिति वचनादित्यर्थः।

अत्र चेति। तथाच चूड़ान्तसंस्कारसंस्कृतस्य परिग्रहे जनकप्रतिग्रहीत्रोरुभयोरभिसन्धाने दत्तकस्य द्व्यामुष्यायणत्वं नान्यथेति भाव। पितुरिति।—पितुर्जनकस्य इत्यर्थः। आचूडान्तं चूड़ापर्य्यन्तसंस्कृत इत्यर्थः। स प्रतिग्रहीतुर्न पुत्त्र इत अन्यस्य जनकस्य

स्युरन्यथा दास उच्यते। यदि स्यात् कृतसंस्कारो यदि वातीतशैशवः। ग्रहणे पञ्चमाद्वर्षात् पुत्रेष्टिं प्रथमं चरेदिति॥" तदमूलम्। समूलत्वेऽपि यज्जनकगोत्रेण चूडान्तसंस्कारसंस्कृतस्य न गृहीतुः पुत्रत्वं गृहीत्वैव चूडादिसंस्कारकरणे तत्। यदि च कृतचूडो ऽतीतपञ्चवर्षो वा ग्राह्यो भवति न तदास्य पुत्रत्वं सम्भवतीति च वदन्ति तन्न। अनुवादापत्तेः। पञ्चवर्षाभ्यन्तरगृहीतस्याप्युपनयनात् पूर्व्वं सकलशिष्टानुमोदितपुत्रत्वव्यवहारानुपपत्तेः तदानीं गृहीतरि मृते तच्छ्राद्धानधिकारापत्तेश्च।

किन्त्वयं वचनार्थः। जनकगोत्रेण कृतचूडान्तसंस्कारस्य पुत्रत्वं

---

पुत्रतां याति इत्यर्थः। अन्यथेति।—तस्य विवरणं यदि स्यादिति। अतीतशैशव।—गर्भस्थे सदृशो ज्ञेय आष्टमाद्वत्सरात् शिशुः। बाल आषोडशाद्वर्षात् पौगण्डश्चेति शब्द्यते इत्यष्टमाब्दस्य शिशुत्वाभिधानात् तदतिक्रान्त इत्यर्थः। कृतचूडो जनकेन इत्यर्थः। तथाच अकृतसंस्कारस्यापि तादृशस्य ग्रहणे न पुत्रत्वमिति भाव इति व्याख्यातृणामभिप्रायः। अनुवादापत्तेरिति।—तथाच गोत्रेणैव कृतचूडान्तसंस्कृतस्य पुत्रत्वे निषिद्धे यदि स्यात् कृतसंस्कारो यदि वातीतशैशव इत्यनेन कृतचूडान्तसंस्कृतस्य पुत्रत्वनिषेधे अनुवादापत्तेरित्यर्थः। 'उपनयनात्' उपनयनमुख्यकालात् गर्भाष्टमाब्दरूपादित्यर्थः। तथाच ब्राह्मणस्य मासत्रयाधिकसप्तमवर्षपर्य्यन्तं क्षत्रियस्य मासत्रयाधिकदशमवर्षपर्य्यन्तं वैश्यस्य मासत्रयाधिकैकादशवर्षपर्य्यन्तं पुत्रग्रहणकाल इति सिद्धम्। तदानीमिति।—पञ्चवर्षानन्तरमित्यर्थः। तथाच तादृशपुत्रे जनकस्य दानात् स्वत्वनाशेन पुत्रत्वस्यापाये

निषिद्धः प्रतिग्रहीता पुनश्चूडादिकरणे तत् प्रतिप्रसूतम्। ततश्च कृतसंस्कारस्यातीतपञ्चवर्षस्य च ग्रहीता चूडादिकरणात् पूर्व्वं दासत्वाक्षेपात् चूडादिकरणानन्तरं पुत्रत्वं लब्धम्। अकृतसंस्कार-स्यानतीतपञ्चवर्षस्य तु परिग्रहशास्त्रादेव तत् प्राप्तं तच्च विततम्। अथवा जनकेन चूडान्तं संस्कृतोऽपि पुत्रो न पुत्र इत्यपुत्रत्वादेशः यतोऽन्यतश्च पुत्रतां यातीति हेतुरुपदिष्टः। तथा च एकस्य पुत्रपदस्य चकारस्य च वैयर्थ्यदूषणमपि परिहृतम्। एवञ्च चूडाद्या इत्यतद्गुणसंविज्ञानबहुव्रीहिणा द्विजातीनामुपनयन-लाभः शूद्रस्य तु विवाहादिलाभः। अन्यशाखोद्भवो दत्तः पुत्रश्चै-वोपनायितः। स्वगोत्रेण स्वशाखोक्तविधिना स स्वशाखभागिति

---

प्रतिग्रहीतुरपि पुत्रत्वाभावे असौ कस्यापि पुत्रो न स्यात्। न च मा भूदिति। पुत्रत्वाभावप्रयोजकपातित्यादिदोषाभावात् अदृष्टा-र्थसापेक्षेतदभिप्रेत्य अनधिकारापत्तेरिति।

स्वमते वचनार्थं प्रदर्शयति किन्त्वयमिति। पुत्रत्वं निषिध्य, पितु-र्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते। आचूडान्तं न पुत्रः स इत्यनेन निषिध्य पुनर्वाक्यान्तरात्: चूडादिकरणे अतद्गुणसंविज्ञान-बहुव्रीहिणा उपनयनादिकरणे इत्यर्थः। तत् पुत्रत्वमित्यर्थः आचू-डान्तं न पुत्र स इत्यनेन निषिद्धस्य पुत्रतां याति चान्यत इत्यनेन पुनर्विधानात् निषिद्धस्य पुनर्विधानं प्रतिप्रसवः। पुत्रत्वं लब्धमिति चूडाद्या इति अन्यथा दास उच्यते इत्यनस्य व्याख्या। यदि स्यादिति।— 'कृतसंस्कार' इत्युपनयनसंस्कार इत्यर्थः। 'अतीतवर्षे इयः' अतिक्रान्त-गर्भाष्टमाब्दादिकाल इत्यर्थः। पञ्चमाब्दात् परं ग्रहणे किं कुर्यां-

प्रागुक्तैकवाक्यत्वात्॥ पञ्चमाद्वर्षादिति। ब्रह्मवर्चसफलार्थिविप्राभिप्रायं, ब्रह्मवर्चसकामस्य कार्य्यं विप्रस्य पञ्चमे इति मनुवचने तत्कामस्य पञ्चमवर्षस्यैव उपनयनमुख्यकालत्वेन तदेकमूलत्वात्। तदनर्थिनस्त्वाष्टमाब्दादिति। क्षत्रियादेरप्युपनयनतत्तन्मुख्यकालादरः। मुख्यकालेऽपि सिद्धाधिकारयोग्यस्यैव गौणकालेऽपि संस्काराधिकारादित्युक्तप्रायम्॥ चूड़ायां गौणकालादरस्तु वचनबलादेव। पुत्त्रेष्टिमिति वर्णत्रयस्यैवाधिकारात् तेन पुत्त्रेष्टि-

---

दित्यत आह ब्राह्मणे इति। तथाच षष्ठमाब्दादिमुख्यकालाभ्यन्तरे पञ्चमाब्दानन्तरं पुत्त्रेष्टिपूर्वकं संग्राह्यमिति तात्पर्य्यमिति ग्रन्थकृतामाशयः। एकस्य पुत्त्रपदस्येति। न पुत्त्रस्येति पुत्त्रपदस्य चकारस्य पुत्त्रतां याति चान्यत इति चकारस्य। शूद्रस्य त्विति।—विवाहमात्रं संस्कारं शूद्रोऽपि लभतां सदेत्यनेन तस्य विवाहरूपसंस्कारस्य प्राधान्यादित्यर्थः। शूद्रस्य विवाहकालः षोड़शवर्षोपरिविधेयः, तथाचाकृतविवाहः शूद्रः षोडशवर्षाभ्यन्तरमेव परिग्राह्य इति बोध्यम्। नच षोडशाब्दात्परात् परमित्यत्रानुपभार्य्यत्वविशेषणमपि व्यर्थमिति वाच्यं तद्विशेषणेन न्यायवर्त्तिनां शूद्राणां षोड़शवर्षोपरि विवाहकालः कल्प्यते, तथाहि शूद्राणां मासिकं कार्य्यं वपनं न्यायवर्त्तिनाम्। वैश्यवत् शौचकल्पश्च द्विजोच्छिष्टञ्च भोजनं इति मनुवचनात् न्यायवर्त्तिशूद्राणां वैश्यवत् शौचकल्पस्यैवात्र चकारात् वैश्यधर्म्मातिदेशेन उपनयनप्रसक्तौ तत्स्थाने ब्रह्मपुराणेन विवाहो विधीयते, यथा विवाहमात्रं संस्कारं शूद्रोऽपि लभतां सदेति तथोपनयनकालश्च गर्भाष्टमेऽष्टमेवाब्दे ब्राह्मणस्योपनायनं राज्ञामेकादशे सैके विशामेके यथाकुलमिति याज्ञवल्क्योक्तः, सैके एकादशाह

पूर्व्वकचूड़ादिभिः पुत्त्रत्वं सम्पाद्यम्। शूद्रेण तु तदापि संस्कारमात्रादेवेति सर्व्वमनवद्यम्। एवञ्च सर्व्वेषामेव मातां कालविशेषमनन्तर्भाव्यैव पुत्त्रपरिग्रहविधानमुपपद्यते। उक्तार्थस्य स्वतःसिद्धत्वात्।

अथैवमुक्तवचनपर्य्यालोचने कृतचूड़स्य दत्तकस्य जनकमात्रपुत्त्रत्वं निषिध्य अन्यतरस्य पुत्त्रत्वं यातीत्यत्र चकारेण जनकप्रतिग्रहीतृसाधारणं सर्व्वं, उभयोरेव संस्कारकत्वात् तच्च उभयोरावयोरयं पुत्त्र इत्यभिसन्धाने सति बोध्यम्। अयमेव द्व्यामुष्यायणो नाम द्विपिता द्विगोत्रश्च।

ननु क्षेत्रजस्यैव द्विपितृकत्वं दृश्यते। तथा हारीतः। जीवति क्षेत्रजमाहुरस्वातन्त्र्यान्मृते द्व्यामुष्यायणं अगुप्तबीजत्वात्। जीवत्यपि क्रियाभ्युपगमाद्द्विपितृको भवतीत्याह मनुः। क्रियाभ्युपगमात्त्विदं बीजार्थं यत् प्रदीयते। तस्येह भागिनौ दृष्टौ बीजी

---

इत्यनुषङ्गात् द्वादश इत्यर्थः अत्र चोत्तरोत्तरकालदर्शनात् शूद्रस्याप्युपनयनस्थलाभिषिक्तविवाहस्य तथैव युक्तत्वादिति भावः। पुत्त्रेष्टिपूर्व्वकेति।—तथाच कृतचूड़स्य ग्रहणे पुत्त्रेष्टिः कार्य्या नाकृतचूड़स्येत्यर्थः। उक्तार्थस्येति।—उपनयनादिमुख्यकालाभ्यन्तरग्रहणस्य। उक्तवचनेति।—उक्तवचनस्य पितुर्गोत्रेणेत्यादिवचनस्य पर्य्यालोचने अथ वेति प्रबन्धरूपे इत्यर्थः। अयमेवेति।—द्विपिता द्विपितृक इत्यर्थः।

क्षेत्रजस्यैवेति।—जीवति इति।—पत्याविति शेषः। तदनुमत्या अन्येनोत्पन्नं क्षेत्रजमाहुरित्यर्थः। अस्वातन्त्र्यादिति।—क्षेत्रस्य पतिपारतन्त्र्यादित्यर्थः। मृते पत्यौ द्व्यामुष्यायणं अगुप्तबीजत्वात्

क्षेत्रिक एव चेति अपुत्त्रबीजिक्षेत्रिकयोर्मम क्षेत्रं तत्र बीजं यदपत्यं तदावयोरित्ययं क्रियाभ्युपगमः तथा अपुत्त्रेण परक्षेत्रे नियोगोत्पादितः सुतः। उभयोरप्यसावृक्थी पिण्डदाता च धर्मत इति॥ दत्तकस्तु तदहृष्टचरं प्रत्युत गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमः सुत इति प्रागुक्तमनुवचनं तद्विपरीतार्थग्राहकमेवास्तीति चेन्न, दत्तकादिष्वपि सर्व्वेषामेकधर्माणामेकस्यापि यदुच्यते। सर्व्वेषामेव तत् कुर्य्यादेकरूपा हि ते स्मृता इति बौधायनदर्शनेन क्षेत्रजधर्मलाभात्। द्वे श्राद्धे कुर्य्यादेकश्राद्धे वा पृथगनूद्दिश्य एकपिण्डे वा द्वावनुकीर्त्तयेत् प्रतिग्रहीतारं चोत्पादयितारं आतृतीयात् पुरुषादिति शाङ्खायनप्रवराध्याये सामान्यतो दर्शनाच दत्तकस्यापि द्विपितृकत्वसिद्धिः॥ अतएव सत्याषाढ़ोऽपि। नित्यानां द्व्यामुष्यायणानां द्वयोरिति सूत्रेण नित्यद्व्यामुष्यायणानां क्षेत्रजानां सप्रवरगोत्रद्वयसम्बन्धमुक्त्वा दत्तकादीनां द्व्यामुष्यायणवदिति सूत्रेण तद्धर्ममतिदिशति॥

---

पत्यभावे गागुप्रक्षेत्रे बीजक्षेत्रत्वादित्यर्थः। तस्येति।—भागिनौ स्वामिनौ दिष्टौ महर्षिभिः। 'ऋक्थी' दायाद इत्यर्थः। एतत्तु उभयोरभिसन्धाने ज्ञेयम्। 'एकरूपा' प्रतिनिधिपुत्रत्वेन तुल्यरूपा इत्यर्थः। द्वे श्राद्धे इति।—श्राद्धद्वयं कुर्य्यादित्यर्थः एकश्राद्धे प्रतिग्रहीतुः जनकस्य च नामोल्लिख्य उभयोरेकैकं पिण्डं दद्यात्, एकपिण्डं गृहीत्वा उभयोर्नाम कीर्त्तयेदिति वार्थः, कल्पत्रयमिदं शक्त्याशक्तिभेदेनेति ज्ञेयम्। नचैच्छिकविकल्पेनानुष्ठानं पूर्वपक्षद्वयस्यानुष्ठानलक्षणाप्रामाण्यापत्तेः। सामान्यत इति।—दत्तकाद्यविशेषेणेत्यर्थः।

विवृतश्चैतद्भाष्यकारैः । नित्यद्व्यामुष्यायणप्रसङ्गेनानित्यानाह दत्तकादीनामिति । तावदेव गोत्रस्य सन्ततौ प्रथमेनैव संस्कारः परिगृहीत्राचेत् तदा उत्तरस्य पूर्व्वत्वात्तेनैव उत्तरत्वेति ॥ एतद्भाष्यार्थस्तु क्षेत्रजवत् उभयोरभिसन्धौ दत्तकस्योभयगोत्रभागित्व अन्यथा जनकेनैव सर्व्वसंस्कारकरणे जनकगोत्रभागित्वं न गृहीतृगोत्रभागित्वं, गृहीत्रा संस्कारकरणे तु उत्तरस्य गृहीतुः पूर्व्वत्वात् प्रधान्यात्तेनैव उत्तरसन्ततेर्गोत्रमिति ।

तथाच पैठीनसिः । अथ दत्तकक्रीतकृत्रिमपुत्त्रिकापुत्त्राः परपरिग्रहेणार्षेण येऽत्र जातास्तेऽसद्भूतकुलीना द्व्यामुष्यायणा भवन्तीति । 'आर्षेण' इत्युक्तेन 'परिग्रहेण' जनकग्रहीत्रोः स्वीकारेण द्व्यामुष्यायणा भवन्तीत्यर्थः । व्यक्तमुक्तम् । द्व्यामुष्यायणका ये स्युर्द्दत्तक्रीतादयः सुताः । गोत्रद्वयेऽप्यनुद्वाहः शृङ्गशैशिरयो र्यथेति । नच दत्तकस्य द्व्यामुष्यायणत्वं न घटते जनकस्यापि तत्र स्वत्वानपायेन माता पिता वा दद्यातामिति दानविध्यनुपपत्तेरिति वाच्यम् । सामान्यं सर्व्वभूतेभ्यो मयोत्सृष्टमिदं जलम् । रमन्तु सर्व्वभूतानि स्नानपानावगाहनैरित्यादौ स्वमात्रस्वत्वनाशकसर्व्वभूतोद्देश्यकत्यागादेव नद्यादिवत् साधारणीकृते जले स्वामिनोऽपि उद्देश्यतया स्वत्ववत् अत्रापि तादृशाभिसन्धिपूर्व्वकादेव दानात् तादृशदत्तकस्य साधारण्यसिद्धिरित्यास्तां विस्तरः ।

---

क्षेत्रजवदित्यादि । न गृहीतृगोत्रभागित्वमिति । तावदेव गोत्रस्य सन्ततौ इत्यस्यार्थः । तेनैव प्रधान्येन इत्यर्थः ।

## अथ दत्तककर्त्तृकश्राद्धनिर्णयः।

तत्र पितुः सपिण्डीकरणान्तषोडशश्राद्धे दत्तकस्य पूर्व्वगृहीतत्वेऽपि सत्यौरसे नाधिकारः। औरसे पुनरुत्पन्ने तेषु ज्यैष्ठ्यं न विद्यते। इति देवलेन ज्येष्ठत्वप्रतिषेधात्। पिण्डदोंऽशहरश्चैषां पूर्व्वाभावे परः परः इति याज्ञवल्क्यवचनाच्च। अन्यत्र सर्व्वौरसवत्।

क्षयाहे तु विशेषो यथा जातूकर्णः। औरसक्षेत्रजौ पुत्रौ विधिना पार्व्वणेन तु। प्रत्यब्दमितरे कुर्य्युरेकोद्दिष्टं सुता दश। इतरे दशदत्तकादयः। तथा पराशरः। पितुर्गतस्य देवत्वमौरसस्य त्रिपौरुषम् सर्व्वं चानेकगोत्राणामेकोद्दिष्टं क्षयेऽहनीति। अनेकगोत्राणां द्विगोत्राणाम्। औरसक्षेत्रजयोरपि साग्न्योरेव पार्व्वणाधिकारः। पार्व्वणेन विधानेन देयमग्निमता सदेति शातातपमत्स्यपुराणैकवाक्यत्वात्। औरसक्षेत्रजव्यतिरिक्तानान्तु साग्निनिरग्निसाधारणमेकोद्दिष्टमिति सिद्धम्। द्व्यामुष्यायणस्येतिकर्त्तव्यतायां विशेषमाह सांख्यायनसूत्रम्। पिण्डान् यथावनेजनं निधाय उभावेकस्मिन् पिण्डे पितृभेदे इति। पितृभेदे एकस्मिन् पिण्डे उभौ जनकग्रहीतारौ कीर्त्तयेदिति शेषः।

---

अन्यत्रेति।—मघामाघसत्स्वादिष्वित्यर्थः। द्विगोत्राणां सम्भवेत। द्विगोत्राणां दत्तकादीनामित्यर्थः। पितृव्येण चैककार्य्यजाता इति।—अभिसन्धानाभावेन इति शेषः। परिणेतुरेव पितृत्वस्यैवेत्यर्थः। 'स्वयं' पितृव्याणां, यदि स्वापितृव्याणां भार्य्यासु अपत्यं स्यादित्यर्थः।

प्रवराध्याये पितृव्येण चैककार्य्यजातास्ते परिग्रहीतुरेव भवन्ति, अथ यद्येषां भार्य्यास्वपत्यं न स्यात् तदा रिक्थं हरेयुः, पिण्डं तेभ्यः त्रैपुरुषिकं दद्युः, यद्यपि स्यादुभाभ्यामेव दद्युरित्याचार्य्यवचनं, द्वे श्राद्धे कुर्य्यादेकश्राद्धे वा पृथगनुद्दिश्य एकपिण्डे वा द्वावनुकीर्त्तयेत्, 'प्रतिग्रहीतारं चोत्पादयितारं' आतृतीयात् पुरुषादिति। ग्रहीतुः क्रियानियमाभावे पुत्रान्तराभावे च तस्यैव क्रियानियमे अपत्यसद्भावे च द्विपितृकत्वमित्यर्थः। अत्र श्राद्धभेदाभेदयोर्व्विकल्पः। न चेदं क्षेत्रजविषयं सत्यापाढ़ेन दत्तकादीनां द्व्यामुष्यायणवदिति सूत्रेण दत्तकेऽपि तद्धर्मातिदेशात्।

तथा हारीतः। तेषामुत्पादयितुः प्रथमं प्रवरो भवति द्वौ द्वा पिण्डौ निर्व्वपेत् एकपिण्डे वा द्वावनुकीर्त्तयेद्द्वितीये पुत्रः तृतीये पौत्रः लेपिन स्तीन् वाचयाण आपञ्चमादित्येके इति। तेषां पितृणां मध्ये बीजिनः प्रथममार्षेयं क्षेत्रिणो द्वितीयमिति द्विप्रवरता। एकपिण्डे वेत्यत्र वीप्साध्याहारः। यदि द्विपिता स्याद-

---

ग्रहीतुरिति।—तस्यैव ग्रहीतुरेवेत्यर्थः। तथाच ग्रहीतु- पुत्रसद्भावे क्रियानियमाभावे च सौ पुत्र क्षेत्रिकस्यैवेत्यर्थः। उभयो साहित्येन कारणत्वम्। क्रियानियमे इति।—तथाचापत्यसद्भावे क्रियानियमाभावे पुत्रः क्षेत्रिकस्यैव न बीजिन इत्यर्थः। विकल्पो व्यवस्थितः नत्वैच्छिकः तस्य दुष्टत्वात् प्रत्ताप्रत्तभेदेन व्यवस्था बोध्या। ग्रहीता प्रथमं मृतः जनको जीवति इत्यर्थः। यदि जनकः मृत इति शेषः ग्रहीता जीवति। उभौ मृतौ स्यातां जनकाय तस्य प्राधान्यादिति भावः। सगोत्रादिति।—द्वैविध्यं ग्रहीत्रे प्रथमं मृतायेत्यर्थः। प्रथमं

कस्मिन्नेव द्वौ द्वावुपलक्षयेदित्यापस्तम्बवचनात्। द्वितीये पितामहपिण्डे द्व्यामुष्यायणस्य पुत्त्रः तृतीये प्रपितामहपिण्डे द्व्यामुष्यायणस्य पौत्त्र इति।

यदि तु गृहीता प्रथमं मृतः तदा तस्मै दद्यात्। अथ यदि जनकस्तदा जनकाय, यद्युभौ तदादौ जनकाय पश्चाद्गृहीत्रे दद्यादित्याह मरीचिः। सगोत्रादन्यगोत्राद्वा यो भवेद्विधवासुतः। पिण्डं श्राद्धविधानञ्च क्षेत्रिणे प्राक् प्रदापयेत्। बीजिने तु ततः पश्चात् क्षेत्री जीवति चेत् क्वचित्। बीजिने दद्युरादौ तु मृते पश्चात् प्रदीयते॥ उभौ यदि मृतौ स्यातां बीजिन्यादौ ततो ददेत्। क्षेत्रिण्यादौ न दत्तं स्याद्बीजिने नोपतिष्ठते इति। एतेनैकतरोपरतावपि द्विपितृकस्य पार्व्वणं दर्शितम्। तथा तुल्यन्यायेन मातृभेदेऽपि द्व्यामुष्यायणदत्तकस्य, पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवमित्यनेन प्राप्तमातामहश्राद्धे जननीपितॄणां प्रथमं निर्द्देशस्ततः प्रतिग्रहीत्री या माता तत्पितॄणाम्।

---

मृताय बीजिने जनकाय दद्यात्। क्षेत्री जीवति मृताय बीजिने दद्युः पश्चात् मृते क्षेत्रिणि तस्मै अपि दद्युरित्यर्थः। उभाविति- बीजिने जनकाय इत्यर्थः। ततो ददेत् अर्थात् पश्चात् गृहीत्रे दद्यात् इत्यर्थः। क्षेत्रिणि गृहीतरि प्रथमं न दद्यादित्यर्थः। यदि क्षेत्रिणि आदौ दत्तं स्यात् पश्चात् जनकाय दीयते तदा तत् पिण्डं जनकसम्बन्धे नोपतिष्ठते तत्श्राद्धस्यासिद्धया जनकोद्धारिणं भवेदित्यर्थः। तथाच प्रतिग्रहीतुर्जनकस्य च उभयोर्हि यदा यदा द्व्यामुष्यायणेन श्राद्धं कार्यं तदा तदैतयोरुभयो श्राद्धं कार्य्यमेव, एतत्तु सामेरेव पूर्व्वोक्तवचनादिति तात्पर्य्यम्।

शुद्धदत्तकस्य तु प्रतिग्रहीत्रा एव मातृ-पित्रादिपिण्डदानं तस्य तन्मचाम्बधाकरत्वादिति । एवञ्च स हि सन्तानाय पूर्वेषामिति हेतुवन्निगदस्वरसान्नैकं पुत्रं दद्यादिति निषेधो द्व्यामुष्यायणातिरिक्तविषय सन्तानविच्छेदाभावादित्युक्तमेव ।

अथास्य सापिण्ड्यम् । जनककुले अवयवान्वयेन प्रतिग्रहीतृकुले च पिण्डान्वयेन त्रिपौरुषं यदाह कार्ष्णाजिनिः । यावन्तः पितृवर्गाः स्युस्तावद्भिर्दत्तकादयः । प्रेतानां योजनं कुर्युः स्वकीयैः पितृभिः सह । द्वाभ्यां सहाथ तत्पुत्राः पौत्राश्चैकेन तत्समम् । चतुर्थे पुरुषे छेदं तस्मादेषा त्रिपौरुषीति । अस्यार्थः, दत्तकादयः पुत्राः प्रेतानां प्रतिग्रहीत्रादीनां पितॄणामौरसत्वे दत्तकत्वे द्व्यामुष्यायणत्वे वा यावन्तः पितृवर्गाः त्रयः षट् वा तावद्भिः सह तेषां योजनं सपिण्डनं कुर्युः । तत्र प्रतिग्रहीत्रादीनामौरसत्वे तत्पितृपितामहप्रपितामहास्त्रयः दत्तकत्वे तत्प्रतिग्रहीतृपितामहप्रपितामहास्त्रयः द्व्यामुष्यायणत्वे तज्जनकादयस्त्रय. तत्प्रतिग्रहीत्रादयस्त्रय इति षट् । एवञ्च दत्तकस्य स्वकर्तृके पार्वणे येषां देवतात्वं स्वपुत्रकर्तृके सपिण्डीकरणेऽपि तेषामेव तथात्वमिति ज्ञापितम् । दत्तकस्य पुत्रास्तु दत्तकसपिण्डीकरणं

---

अवयवान्वयेनेति शुद्धदत्तकविषयं । जनककुले सापिण्ड्यं सात पौरुषं लेपभाज इति सामान्यशास्त्रे विशेषाभावात् । यथाह कार्ष्णाजिनिरिति । अत्र व्याख्यानमस्मत्कृतायां दत्तकमीमांसाटीकायां द्रष्टव्यम् ।

तत्प्रतिग्रहीत्रा तत्पितॄणां त्रयाणां मध्ये द्वाभ्यां सह कुर्य्युः। एवञ्च दत्तकस्य पौत्रा दत्तकप्रतिग्रहीतृश्यां ग्रहीतुः पितॄणां त्रयाणां मध्ये एकेन ग्रहीतुः पित्रेति यावत्तेन च समं सह तत् स्वपितृसपिण्डनं कुर्य्युः। चतुर्थपुरुषे च्छेदमिति। यो यदा यत् सपिण्डीकरोति स तत्पित्रादिभिस्त्रिभिरेव करोतीति चतुर्थे विरामः सिद्ध एवेति तदारम्भः सिद्धे सत्यारम्भो नियमाय इति न्यायेन लेपिनां लेपनिरासेन सापिण्ड्यव्यवच्छेदार्थः। तदेवाह तस्मादेवेति। एषा सपिण्डता। तथाच लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः। पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषमिति मत्स्यपुराणोक्तसाप्तपौरुषसापिण्ड्यस्य सामान्यस्यानेन विशेषेण वाध एव।

अतएव हारीतेन। लेपिनस्त्रीन् वाचयाणः आसप्तमादित्येके इति पक्षान्तरमुपन्यस्तं सङ्गच्छते। तदेव संगृह्याप्यन्यत्रोक्तम्। दत्तकानान्तु पुत्राणां सापिण्ड्यं स्यात्त्रिपौरुषम्। जनकस्य कुले तद्वद्ग्रहीतुरिति धारणेति। यदिदमुभयत्र त्रिपुरुषसापिण्ड्याभिधानं तत् द्व्यामुष्यायणाभिप्रायेण तस्य पितृद्वयेन सपिण्डनाभिधानात्। शुद्धदत्तकस्य तु गोत्ररिक्थे जनयितुर्न्न हरेद्दत्त्रिमः सुतः। गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधेति मानुमान्यतद्वचने पिण्डनिवृत्तिदर्शनात् प्रतिग्रहीतृकुल एव सापिण्ड्यमिति।

यत्तु वृद्धगोतमीयम्। सगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः

सुताः। विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते। सगोत्रेषु मध्ये कृता अपि दत्तकादयो विधिनैव गोत्रं भजन्ते परन्तु तेषु सापिण्ड्यं नोत्पद्यते सगोत्रेष्वपि सापिण्ड्यानुत्पत्तौ परगोत्रेषु सुतरां सापिण्ड्यानुत्पत्तिरिति। ननु पुत्रान्तरवत् साप्तपौरुषसापिण्ड्यप्रसक्तौ निषेधकं सापिण्ड्यप्रयुक्तद्व्यहाशौचा-दिप्रतिषेधकं वा न तु सामान्यतः सापिण्ड्यनिषेधकं उक्तवचन-जातात्।

अथ दत्तकाशौचनिर्णयः।

तत्र शुद्धदत्तकस्य तु जनककुले परस्परमशौचं नास्त्येव गोत्रपिण्डनिवृत्त्या अशौचनिवृत्तेरर्थसिद्धत्वात्। द्व्यामुष्यायणस्य तु उभयत्रैवाशौचमिति। ब्रह्मपुराणे। दत्तकश्च स्वयन्दत्तः कृत्रिमः क्रीत एव च। अपविद्धाश्च ये पुत्रा भरणीयाः सदैव ते। भिन्न-गोत्राः पृथक्पिण्डाः पृथग्वंशकराः स्मृताः। जनने मरणे चैव त्र्यहाशौचस्य भागिनः॥ पराशरः। भिन्नगोत्रः सगोत्रो वा नीतः संस्कृत्य चेच्छया। जनने मरणे तस्य त्र्यहाशौचं विधीयते। तथा औरसं वर्जयित्वा च सर्ववर्णेषु सर्वदा। क्षेत्रजादिषु पुत्रेषु जातेषु

---

दत्तकादीनां जननमरणे त्रिपुरुषसपिण्डानां त्र्यहाशौचमाह ब्रह्मपुराणम् इति। एतत्तु त्र्यहाशौचं असपिण्डदत्तकस्य जननमर-णविषयं ब्रह्मपुराणे भिन्नगोत्राः पृथक्पिण्डाः पृथक्पिण्डा अत्र पिण्डा इत्यनेन तदर्थलाभात् सपिण्डदत्तके तु आकाङ्क्षानुदयेन सामान्यसापिण्ड्यप्रयुक्तत्र्यहाशौचबाधे हेत्वभावात्। एवमेव वामका

च स्मृतेषु च। अशौचन्तु त्रिरात्रं स्यात् समानमिति निश्चयः। सर्वदा उपनयनानन्तरमपि। अत्र सगोत्रस्यापि विधिना जनकगोत्रविच्छित्तिपूर्वकप्रतिगृहीतृगोत्रप्राप्तावसगोत्रदत्तकाविशेषात् त्र्यहाशौचमुक्तं युक्तमेव। तथा दत्तके अकृतोद्वाहे पश्चाज्जातस्यौरसस्य विवाहे न परिवेदनदोषः न वा दत्तकस्याग्रजसोदरात् पूर्वं विवाहकरणेऽपि चेति।

ननु शूद्रदत्तकस्य जनककुले सापिण्ड्यविच्छेदस्य दर्शितत्वात् तत्र विवाहः प्रसज्येत प्रसज्येत च द्व्यामुष्यायणस्यापि त्रिपुरुषानन्तरितकन्यासन्ततिपरम्परया विवाहः। मैवम्। असपिण्डा च या मातुरसगोत्रा च या पितुः। सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने। चकारात् पितुरसपिण्डा च इति मनुवचने प्रतिगृहीतृमात्रगोत्रस्यापि दत्तकस्य जनकस्यापि सपिण्डासगोत्रावर्ज्जनाय पितुरिति पदोपादानात्। न च तथापि दत्तकस्य पितुरपि दत्तकत्वे तत्त्रिपुरुषानन्तरितकन्यासन्ततेर्विवाहः केन वार्य्यते पितृसापिण्ड्य-

---

करभट्टाः। भिन्नगोत्र इति। यद्यपि सगोत्रो वेत्यनेन सपिण्डदत्तकस्य दशाहाशौचाभ्यनुज्ञानात् अन्यथा तत्र सगोत्रो वा इति न लिखित्वा सपिण्डो वा इत्येवावदिष्यत्। दत्तकपुत्रस्य जननादौ दत्तकसपिण्डानां दशाहाशौचमेव येषां दत्तकत्वनिबन्धनं सापिण्ड्यं तेषां जननमरणे परस्परं त्र्यहाशौचव्यवस्था अन्यथा त्रिपुरुषव्यापकसपिण्ड पृथक् स्थित स्यात् नहीदृशव्यवहारो दृष्टचरः। न परीति।—कुब्जवामनषण्ढेषु … परिविन्दन् दुष्यतीति वचनात्।

सगोत्रत्वयोरभावादिति वाच्यम्। यतो विवाहे न तत् सापिण्ड्य-मुपयुज्यते किन्तु सर्वसाधारणं परिभाषित पितृपक्षे साप्तपौरुषं मातामहपक्षे पाञ्चपौरुषञ्चेति न काप्यनुपपत्तिः। तत्प्रपञ्चस्तु तत्र तत्र वक्तव्य इति।

अथ दत्तकविभागः।

तत्र बृहस्पतिः। एक एवौरसः पुत्त्रः पित्र्यस्य वसुनः प्रभुः। शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम्। शेषाणां ये तदंश-भागित्वेन निर्दिष्टास्तेषाम्। 'आनृशंस्यं' दया। 'प्रजीवनं' भरणम्।

तथा यमः। पुत्त्रास्तु द्वादश प्रोक्ता मुनिभिस्तत्त्वदर्शिभिः। तेषां षड् बन्धुदायादाः षड़दायादबान्धवाः। स्वयमुत्पादित स्त्वेको द्वितीयः क्षेत्रजः स्मृतः। तृतीयः पुत्त्रिकापुत्त्रो जाति-धर्मविदो विदुः। पौनर्भवश्चतुर्थस्तु कानीनः पञ्चमः स्मृत। गृहे च गूढ़ उत्पन्नः षड़ेते पिण्डदायिनः। अपविद्धः सहोढ़श्च दत्तः कृत्रिम एव च। क्रीतश्च पञ्चमः पुत्त्रो यश्चोपनयते स्वयम्। इत्येते सङ्करोत्पन्नाः षड़दायादबान्धवाः॥

नारदः। औरसः क्षेत्रजश्चैव पुत्त्रिकापुत्त्र एव च। कानी-नश्च सहोढ़श्च गूढ़ोत्पन्नस्तथैव च॥ पौनर्भवोऽपविद्धश्च दत्तः क्रीतः कृतस्तथा। स्वयं चोपागतः पुत्त्रा द्वादशैते प्रकीर्त्तिताः। तेषां षड्‌बन्धुदायादाः षड़दायादबान्धवाः। पूर्व्वः पूर्व्वः स्मृतोऽच्छ्रेष्ठो जघन्यो यो य उत्तरः॥ क्रमादेते प्रवर्त्तन्ते मृते पितरि तद्धने।

ज्यायसो ज्यायसोऽभावे जघन्यो यो य आप्नुयात्॥ पूर्व्वपूर्व्वाभावे उत्तरोत्तरेषां द्रविणार्हत्वमित्यर्थः। औरसक्षेत्रजपुत्त्रिकापुत्त्रपौनर्भवकानीनगूढ़ोत्पन्नसहोढ़दत्तकक्रीतस्वयमुपागतापविद्धयत्रक्वचनोत्पादितानभिधाय विष्णुः। तेषां पूर्व्वः पूर्व्वः श्रेयान् स एव दायहरः स चान्यान् बिभृयात्। औरसपुत्त्रिकापुत्त्रक्षेत्रजगूढ़जकानीनपौनर्भवदत्तकक्रीतकृत्त्रिमस्वयन्दत्तसहोढ़ापविद्धानभिधाय पिण्डदोऽंशहरश्चैषां पूर्व्वाभावे परः परः॥

मनुः। न भ्रातरो न पितरः पुत्त्रा रिक्थहराः पितुः। तथा। श्रेयसः श्रेयसोऽभावे यवीयान्रिक्थमर्हति। बहवश्चेत्तु सदृशाः सर्व्वे रिक्थस्य भागिनः। सदृशा गुणेन औरसत्वक्षेत्रजत्वाद्युपाधिना वा। श्रेयस औरसादेः। यवीयान् न्यूनः क्षेत्रजादिरित्यर्थः। तथा औरसक्षेत्रजौ पुत्त्रौ पितृरिक्थस्य भागिनौ। दशापरे च क्रमशः पितृरिक्थांशभागिनः। दश दत्तकादयः।

हारीतः। स्वयमुत्पादितः क्षेत्रजः पौनर्भवः कानीनः पुत्त्रिकापुत्त्रो गूढ़ोत्पन्नश्चेति बन्धुदायादाः। दत्तः क्रीतोऽपविद्धः सहोढ़ः स्वयमुपागतः सहसादृष्टश्चेत्यबन्धुदायादाः।

मनुः। पुत्त्रान् द्वादश यानाह नृणां स्वायम्भुवो मनुः। तेषां षड् बन्धुदायादाः षड्दायादबान्धवाः। औरसः क्षेत्रजश्चैव दत्तः कृत्त्रिम एव च। गूढ़ोत्पन्नोऽपविद्धश्च दायादा बान्धवास्तु षट्। कानीनश्च सहोढ़श्च क्रीतः पौनर्भवस्तथा। स्वयन्दत्तश्च शौद्रश्च षड्दायादबान्धवाः॥

बौधायन। औरस पुत्रिकापुत्रं क्षेत्रज दत्तकृत्रिमौ। गूढश्चैवापविद्धश्च रिकथभाज प्रचक्षते॥ कानीनश्च सहोढश्च क्रीत पौनर्भव तथा। तथा। स्वयन्दत्त निषादश्च गोत्रभाज प्रचक्षते॥ एतच्च कानीनादीनां गोत्रमात्रभागित्वकथनमौरसादीनां मध्ये कस्यापि सम्भवे ऽप्रहत्वप्रतिषेधार्थम्। सहोढदत्तक क्रीतस्वयमुपागतापविद्धशौद्रानभिधाय औरसादीन् परामृश्य पुनर्वशिष्ठ। यस्य तु सर्वेषां वर्णानां न कश्चिद्दायादः स्यादेते तस्य भाग हरेयु॥

औरसपुत्रिकापुत्रक्षेत्रजकानीनगूढोत्पन्नापविद्धसहोढपौनर्भवदत्तकस्वयमुपागतकृतकक्रीतानभिधाय देवल। एते द्वादश पुत्रास्तु सन्तत्यर्थमुदाहृताः। आत्मजा परजाश्चैव लब्धा याहृच्छिकास्तथा॥ तेषा षड्बन्धुदायादा पूर्वेऽन्ये पितुरेव षट्। विशेषश्चापि पुत्राणामानुपूर्व्यां विशिष्यते॥ सर्वे ह्यनौरसस्यैते पुत्रा दायहरा स्मृता। औरसे पुनरुत्पन्ने तेषु ज्यैष्ठं न विद्यते॥ तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिन। हीनास्तमुपजीवेयु ग्रासाच्छादनसम्भृता।

कात्यायन। उत्पन्ने त्वौरसे पुत्रे तृतीयांशहरा स्मृता। सवर्णा असवर्णास्तु ग्रासाच्छादनभागिन॥ चतुर्थांशहरा स्मृता इति द्वितीयचरणे क्वचित पाठ॥ वशिष्ठ। तस्मिंश्चेत् प्रति गृहीते औरस उत्पद्यते स चतुर्थभागभागी यदि नाभ्युदयिकेषु प्रयुक्त स्यात। स प्रतिग्रहीतपुत्र आभ्युदयिकेषु यज्ञादिषु यदि

श्रौरसेन प्रयुक्त न स्यात् प्रभूतं धनमिति विशेष:॥ अत्र नानाविध मुनिवचनानां परस्परविरोधपरिहारार्थमेवं व्याख्यायते इह स्मृतिवचने श्रौरसमात्रस्य धनभागित्वकथनमन्येषां भरणमात्र-कथनञ्च असवर्णक्षेत्रजदत्तकादिविषयं देवलकात्यायनवचनैकवाक्य-त्वात्। नारदादिवचनेषु च श्रौरसाद्यभावे क्षेत्रजदत्तकादीनां स्वकृत्यग्रहणविधिरपि सर्व्वधनग्रहणविषय:। अतश्च दत्तकग्रहणा-नन्तरमौरसोत्पत्तौ तदौरसचतुर्थांशविधिर्वशिष्ठोक्तो दत्तक विषये ज्ञेय। तथा देवलकात्यायनवचने तृतीयांशग्रहणविधि रत्युत्कृष्टगुणदत्तकविषयो वाच्य। उपपन्नो गुणै: सर्व्वै: पुत्त्रो यस्य हि दत्त्रिम॥ स हरेतैव तद्रिक्थं सम्प्राप्तोऽप्यन्यगोत्रत इति मनुवचनैकवाक्यत्वात्। गुणै जातिविद्याचारै। समग्रधन-भोक्ताप्यादौरसोऽपि जघन्यज॥ त्रिभाग क्षेत्रजो भुङ्क्ते चतुर्थं पुत्त्रिकासुत इति ब्रह्मपुराणदर्शनात्। क्षेत्रजविषय इत्यन्ये। तथा केनापि मुनिना दत्तकस्य बन्धुदायादत्वमन्येन चादायादत्व-मुक्तम् तत्गुणवद्भेदेन समाधेयम्॥ पितुरिव बन्धूनां सपि-ण्डानामपि दायहरत्वाद्बन्धुदायादत्वं पितृमात्रदायहरत्वात् अबन्धु दायादत्वं तेषां षड्बन्धुदायादा पूर्व्वेऽन्ये पितुरेव षट् इत्यत्र पितुरेवेत्येवकारश्रवणात्। एवं दत्तकस्य धनग्रहणादौ मुनि भेदेन पूर्वापरोक्तिवैषम्यं गुणागुणविवेकेनापास्तम्। एतेनौरसस्य भ्रात्रादिधने येनैव भ्रातृत्वादिना सम्बन्धेनाधिकारित्वं तादृशेनैव सम्बन्धेन तादृशदत्तकस्यापि यथासम्भवमुचितांशभागित्वमवधेयम्।

एवं धनिनि पुत्रान्तरसत्त्वे मृतपितृकस्य दत्तकपौत्रस्यापि दत्तोचितांशभागित्वं तदसत्त्वे सर्वहरत्वमपीति। न च पौत्रस्य स्वपितृयोग्यांशभागित्वनियमात् दत्तकस्य ग्रहीतुः पितामहौरससत्त्वे तादृशपितृव्यतुल्यस्यैवांशस्य तद्योग्यत्वाद्दत्तकपौत्र पितृव्यतुल्यमेवांश लभतामिति वाच्य, पुत्रस्य दत्तकत्वे चतुर्थांश, पौत्रस्य तु तथात्वे समानांश इति वैषम्यात्। ततश्च स्वसमानरूपस्य पितुर्यादृशांशः शास्त्रसिद्धस्तस्यैव स्वपितृयोग्यांशतेति यथोक्तमेव साधु। एवं रीतिः प्रपौत्रेऽप्यनुसर्त्तव्येति।

नन्वौरसक्षेत्रजदत्तकादीनां सामान्यधनाधिकारित्वेऽपि राज्येऽनधिकार श्रूयते। यथा औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च। गूढोत्पन्नोऽपविद्धश्च भागार्हास्तनया इमे॥ कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा। स्वयन्दत्तश्च दासश्च षडिमे पुत्रपांशुलाः॥ अभावे पूर्वपूर्वेषां परान् समभिषेचयेत्। पौनर्भवं स्वयन्दत्तं दासं राज्ये न योजयेत्॥ तथा न क्षेत्रजादींस्तनयान् राजा राज्येऽभिषेचयेत्। पितॄणां साधयेन्नित्यमौरसे तनये सतीति। उच्यते। शास्त्रान्तरसद्भावे विशेषशास्त्रस्य सामान्यपरत्वमेव लाघ-

दत्तकस्येति। ग्रहीतुरौरसत्वे इत्यर्थः। स्वसमानेति।—पुत्र पौत्र प्रपौत्रेषु वा दत्तकस्वरूप चतुर्थभागभागी औरसस्वरूप समांशी भवतीति तात्पर्य्यम्। 'पुत्रपांशुलाः' पुत्राधमा इत्यर्थः। पांसून् पापानि लाति गृह्णातीति व्युत्पत्तेः। पुत्रपांसना इति दन्त्यान्तमध्यपाठे तु सर्वार्थे पांसनशब्दोऽधमवाचीति प्रसिद्धेः। नित्यं श्राद्ध पितॄणां साध-

वात्। अतएव पूर्वपूर्वाभावे परपराधिकारबोधक हि पूर्ववाक्यं प्रागुक्तनारदादिवचनैकवाक्यतया सवर्णरान्यमेव विषयीकरोति, परवचनञ्च सत्यौरसे क्षेत्रजदत्तकादीनां समानांशनिषेधकम् अथ वर्णक्षेत्रजदत्तकादिविषय वा। अन्यथा वाक्यभेदे गौरवम्। तत्-स्त्रीकारेऽपि नानेन वचनेन क्षेत्रजदत्तकादीनां सत्यौरसे स्वस्वोचितांशो निषिध्यते किन्त्वौरसमत्त्वे तेषामभिषेक निषिध्यौरसस्य राज्येऽभिषेको विधीयते। तथा च क्षेत्रजदत्तकादय सामान्यशास्त्रप्राप्तमंश लभन्त एव तत्सङ्कोचकाभावात्। नचैतदेव वचनं

येत् कुर्यादित्यर्थः। शास्त्रान्तरसद्भाव इति।—शास्त्रान्तरन्तु अभावे पूर्व्वपूर्व्वयामिति। विशेषशास्त्रन्तु न क्षेत्रजादीस्तनयानिति। तत्-स्तीकारेऽपि न क्षेत्रजादीनितिविशेषशास्त्रव्यापारेऽपि। निषिध्यते तत्र राजा राज्येऽभिषेचयेदित्यभिषेकश्रवणात् तावन्मात्रस्य निषेध नतंशनिषेध इति तात्पर्य्यम्। परवचनमिति।—न क्षेत्रजादीनिति परवचनमित्यर्थः। ननु न क्षेत्रजादीस्तनयान् इत्यत्र वचने औरस सत्त्वे दत्तकादीनामभिषेकनिषेधात् कथं समानांशनिषेधक वचनं व्यवस्थाप्यादित्याह अथवर्णेति। यदि स्यादन्यजातीयो गृहीतोऽपि सुत क्वचिदंशभाजं न तं कुर्य्यात्स्नेहनकस्य मतं हि तदिति वचनात्। अन्यथा परत्याख्याने। वाक्यभेद इति।—क्षेत्रजादय. सत्यौरसे राज्यांश न प्राप्नुयुस्तदन्यधनस्यांशं प्राप्नुयुरिति वाक्यभेदे इति। सामान्यत इति।—औरस, क्षेत्रजश्चैव दत्त कृत्रिम एव च। गूढोत्पन्नोऽपविद्धश्च भागार्हास्तनया इमे इति सामान्यशास्त्र तत्प्राप्तमित्यर्थः। तत्सङ्कोचकाभावादिति।—तत्र न क्षेत्रजादीस्तनयानिति वचन तत्सङ्कोचकमिति वाच्यं तत्र राज्येऽभिषेचयेदिति श्रवणात् क-

बाधक भिन्नविषयत्वात्। अतएव भागार्हीसनया इमे इत्यनेन पूर्व्ववचने भागार्हत्व स्पष्टीकृतम्। राज्यातिरिक्तस्य भाग इति न शक्यते वक्तुं, राज्यस्यैव तत्रोपस्थितत्वात पौनर्भवादीनाञ्च पूर्व्व पूर्व्वाभावेऽपि राज्यनियोजनाभाव पृथगभिधानसामर्थ्यादिति।

एतावता मवन्वेनाभिहितोऽथ क्षेत्रजदत्तकादीनामौरसेन सह विभागप्रकार स तु शूद्रस्य न सम्भवति तस्य तु दास्यां वा दास दास्यां वा य शूद्रस्य सुतो भवेत्। सोऽनुज्ञातो हरेदंशमिति धर्म्मो व्यवस्थित इति मनुवचनेन जातोऽपि दास्यां शूद्रेण काम-

---

निषेधानयमात्। पृथगिति।—पौनर्भव स्वयंदत्त दास राज्ये न योजयेदिति विधानात्। अन्यथा तद्वचनवैयर्थ्यापत्ते न क्षेत्रजादीनित्यनेनैव तदर्थलाभात औरससत्त्वेऽपि दत्तकादयो यथायोग्य राज्यस्य तदितरस्य वा भाग लभन्त एव राज्यनियोजनन्तु औरसस्यैव तदभावे क्षेत्रजादिक्रमेण राज्यनियोजनं पुत्त्रसामान्याभावेऽपि पौनर्भवादीनां राज्यनियोजनाभाव एव तत्र सपिण्डादीनां तदेव अन्यधनन्तु समग्रमेव पौनर्भवादयोऽपि प्राप्नुवन्त्येव पुत्त्रत्वात् स्वर्यातस्य ह्यपुत्त्रस्येति याज्ञवल्क्यवचनादिति।

एतावतेति। विभागप्रकारश्चतुर्थांशरूप मनुष्टतीयोक्तरूप भ्रात-द्दत्तार्द्धभागिन इत्यनेनोक्तत्वात् विषमविभक्तत्वाभावात्। शूद्रस्य न सम्भवति विषमविभक्तत्वादिति शेष। तदेव प्रतिपादयति तस्य त्विति। दासदास्यामिति दासोढायां दास्यामित्यर्थं। दासेनोढा तु दासी या सापि दासीत्वमाप्नुयादिति स्मृती। हरेदंशमिति।—सामान्यश्रवणात् सम स्यादनुतश्चाद्विशेषश्रुतेरिति न्यायात् समांश एव लभ्यते। अर्द्ध-

तोऽंशहरो भवेत्। मृते पितरि कुर्य्युस्तं भ्रातरस्त्वर्द्धभागिनम्। अभ्रातृको हरेत् सर्वं दुहितॄणां सुतादृते इति याज्ञवल्कीयेन च दासीपुत्रस्याप्यौरसेन समांशाभिधानेन पितुरनन्तरं भ्रातृरहितस्य तस्यैव दौहित्रेण सह विभागदर्शनेन च दत्ताद्यपूर्वाणामपि सति पितरि क्षेत्रजदत्तकादीनामौरसेन समांश असति तु तदर्द्धांश। अन्यथा यत्र च 'क्षेत्रजदत्तकादीनामौरसचतुर्थांशित्व' तत्र तदपेक्षया अ-

भागिन स्वभागादर्द्धभागिन तृतीयभागिनमित्यर्थं। दुहितॄणां सुता ऋते इति।—दौहित्रादित्यर्थ। दुहितॄणां सुतादृते इति दुहितु पृथक् निर्देशात् तस्या अप्यधिकार सूचित तदधिकारात् पत्न्या अधिकारो दत्ताद्यपूर्वायितो लभ्यते। अन्यथा दुहितॄणां सुतादृते इति नोक्ता दौहित्रादित्येवावदिष्यत् इति बोध्यम्। असतीति।—तदर्द्धांश तृतीयांश इत्यर्थ। इदमतीवायुक्त शूद्रस्य दास्या जातस्य क्षेत्रज पुत्रतयाङ्गीकर्त्तव्यत्वात् न दासीपुत्रतया क्रीताया विवाहिताया जातस्य दासीपुत्रत्वाभिधानात् क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते। न सा दैवे न सा पैत्रे दासीं तां कवयो विदु। क्रीता या रमिता मूल्ये सा दासीति निगद्यते। तस्या यो जायते पुत्रो दासपुत्रस्तु स स्मृत इति वचनाभ्यां तथापि तयोरस्येऽन्तर्भावात् अन्यथा पुत्र द्वादशत्वस्याविरोधापत्ते तथाचास्य क्षेत्रजत्वेन सति पितरि औरस समांश मृते पितरि तदर्द्धांश उक्त सदयुक्तियह एव, तदभिप्रेत्य स्वाक्षि तत्त्वे सार्धेयक्तम्। वस्तुतस्तु मनुष्यादियपुराणवचनात् कलौ क्षेत्रज- पुत्रकरणनिषेधात् स च पुत्रो बीजिनामेव इदानीं व्यवहारोऽपि तथा जातोऽपि दास्यां शूद्रेण कामतोऽंशहरो भवेत। मृते पितरि कुर्य्युस्त भ्रातरस्त्वर्द्धभागिनमिति याज्ञवल्क्यदर्शनात् शूद्राणामेव तथाविधा

त्यन्तविप्रकृष्टस्य दासीपुत्रस्यौरससमांशित्वमिति महद्वैषम्यं स्यात्। एवं सत्सु क्षेत्रजादिषु सत्योश्च पत्नीकन्ययोर्दौहित्राधिकारे क्रिया-धिकारविधिबाधापत्तिः। तेन दौहित्रपर्य्यन्ताधिकारिशून्यायां तदेकतमे सत्यपि न दासीपुत्रस्य सर्वहरत्वं किन्तु तत्समांशः।

अतएव दत्तपुत्रे यथा जाते कदाचित्त्वौरसो भवेत्। पितु-र्वित्तस्य सर्व्वस्य भवेतां समभागिनौ इत्यपि वचनं शूद्रविषय एव योजनीयम्। तथा शूद्रस्य तु सवर्णैव नान्या भार्य्योपदिश्यते। तस्यां जाताः समांशाः स्युर्यदि पुत्रशतं भवेत्॥ इत्यत्र वचने शूद्राणां भार्य्योत्पन्नानां सर्व्वेषां समांशमभिधाय पुनर्यदि पुत्र-शतमित्यनेन पुत्रान्तराणामपि समांशता प्रतिपादिता। औरस-मात्रपरत्वे पूर्व्वेणैतत्प्राप्तत्वात् पुनरेतदभिधानं व्यर्थं स्यात्।

द्व्यामुष्यायणदत्तकस्य तु जनकप्रतिग्रहीत्रोरुभयोरपुत्रत्वे सर्व्व-रिक्थहरत्वं सत्यौरसे गृहीतस्य तु नांशहरत्वं यद्वानान्तर-

---

याद्देशान्तरस्थो मृतश्चेति। अतएव ह्यामुष्यायणवचनमप्येतत्-परम्। अद्यापुत्रायणवचनन्तु यादाविक्रय दत्तायां कुर्वीत पुत्रयो-र्द्वयोः। पितुर्यच्च रिक्थं स्यात् सर्व्वं तत्र समविभागिनाम्। यथा माता द्वयोर्यच पितरौ द्वौ च कुर्वीत। तयोः स्यात् पुत्रकादैक्यं सततञ्च परस्परम् इति।

अतएवेति। दत्तपुत्रे यथा जात इति। इदन्तु दत्तकस्यापुत्र-गृहयात्रे यथाजात इत्यभिधानात् यथामन्दस्य गुणे सादृश्ये च यथेति मन्त्रपठितैरभिहितत्वात् अन्यथा यद्यपीह इति पूर्व्वपक्षविरोधात् इति बोध्यम्। द्व्यामुष्यायणेति। सर्व्वेति।—पूर्व्वाभावे पर पर इति

मौरसोत्पत्तौ तु जनकधने तदौरसार्द्धहरत्वं ग्रहीतुरसाधारण दत्तकस्य यादृशोऽंशः शास्त्रीयः तदर्द्धहरत्वञ्चेति। यदाह प्रवराध्याय। यद्येषा स्वासु भार्य्यासु अपत्यं न स्यात् तदा रिक्थं हरेयुरिति। तथा नारद। द्व्यामुष्यायणका दद्युर्द्वाभ्यां पिण्डोदके पृथक्। रिक्थादर्द्धं समादद्युर्बीजिक्षेत्रिकयोस्तथेति। बीजिक्षेत्रिकपदयोर्जनकप्रतिग्रहीत्रुभयोपलक्षकत्वं प्रागेवाभिहितम्।

अथान्धपङ्गुप्रभृतिपुत्राणां धनानधिकारितया तदौरसत्वेन

---

वचनात् इति शेषः। ग्रहणानन्तरमिति औरसोत्पत्तौ जनकग्रहीत्रोरुभयोरिति शेषः। जनकधन इति।—तदौरसार्द्धहरत्वं औरसतृतीयांशहरत्वमित्यर्थः। ग्रहीतुरिति।—यादृशोऽंशो गुणवतां तृतीयांशरूपः निर्गुणानां चतुर्थांशरूपो वा तदर्द्धहरत्वं गुणवत्त्वे औरसषष्ठांशहरत्वं निर्गुणविषये औरसाष्टमांशहरत्वमित्यर्थः। युक्तञ्चैतत् द्व्यामुष्यायणग्रहणानन्तरमौरसोत्पत्तौ तेनैव ग्रहीतुः सकलौर्द्धदैहिकक्रियासम्पादनेन द्व्यामुष्यायणस्य ग्रहीतुर्जनकस्य-चौर्द्धदैहिकक्रियानधिकारित्व उपकारकत्वाभावात् शुद्धदत्तकस्य ग्रहीतुः श्राद्धाद्यौर्द्धदैहिकक्रियाधिकारित्वे विप्रकृष्टत्वेन तस्मादपि पितृधनन्यूनांशग्रहणस्यौचित्यात् विषमविप्रकृष्टत्वाभावात् इति। उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः स्मृता इति कात्यायनीयात् चतुर्थांशहराः स्मृता इति कात्यायनीयतृतीयचरणपाठान्तराच्च। प्रमाणान्तरं दर्शयति यदाहेति। द्वयोः जनकप्रतिग्रहीत्रोः नक्तवचनन्तु व्यक्तिभेदात् रिक्थं हरेयुः सर्वमिति शेषः। विशेषाश्रवणादिति भावः। प्रमाणान्तरं दर्शयति तथेति। अर्द्धांशं तृतीयांशमित्यर्थः।

अयोरेव पितामहधनभागित्वश्रुतेर्न तदगृहीतदत्तकपुत्रादेः पितामहधनाधिकारः किन्तु भरणमात्रम्, अन्धादिभार्य्याणां भरणविधानेन तद्भरणस्य दण्डापपादितत्वात्। तथाहि अन्धपङ्ग्वादीननधिकारिपुत्रानभिधायाह औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः। अपुत्रा योषितश्चैषां भर्त्तव्याः साधुवृत्तयः। सुताश्चैषां प्रभर्त्तव्या यावन्न भर्त्तृसात् कृता इति। एवं ग्रहणानन्तरमुत्पन्नौरसेन सह दत्तकस्य विभागदर्शनात् सत्यौरसे गृहीतस्यापि नांशभागित्वमिति। तथा विधानं विना परिगृहीतस्यापि नांशभागित्वमित्याह। तस्मिन् जाते सुते दत्ते न कृते च विधानके। तत् स्वं तस्यैव वित्तस्य यः स्वामी पितुरञ्जसा। तथा

(*) प्रकरणान्तरं दर्शयति यथेति। एषां क्लीवादीनामित्यर्थः। क्लीवस्य क्षेत्रजा अन्येषां औरसा क्षेत्रजाश्च सम्भवन्तीत्यर्थः। औरसक्षेत्रजग्रहणात् तदगृहीतदत्तकादीनां नाधिकार इति सूचितम् एषां पुत्रिकापुत्रस्य तेष्वनाधिकारो भवत्येव, तस्य औरसतुल्यत्वादितिभावम्। प्रभर्त्तव्या इत्यनेनासां चतुर्थांशदानं नास्तीति प्रतिपादितम्। नांशभागित्वमिति।—पुत्रत्वाभावादिति शेष। पुत्रोत्पत्तौ औरसाभावस्यापि विशेषणत्वादिति भाव। विधानं विनेति।—शौनकवशिष्ठाद्युक्तमेतद्विधानं विनेत्यर्थः। नांशेति।—पुत्रत्वाभावादिति शेषः। विधानस्यापि पुत्रोत्पत्तौ हेतुत्वादिति भावः। तस्मिन् इति।—तस्मिन् औरसे सति दत्ते सुते जाते इत्यन्वयः, विधानके विधाने न कृते दत्ते इत्यनुषज्यते, विधानं विना परिगृहीते दत्तके इत्यर्थः। तत् स्वमिति।—यः पितुर्वित्तस्य अञ्जसा हठात् स्वामी पुत्रत्वेन इत्यर्थः औरसः तत-

मनुः। यविधाय विधानं यः परिगृह्णाति पुत्त्रकम्। विवाहविधिभाजं तं न कुर्य्यात् धनभाजनमिति। अन्यजातीयदत्तकस्यापि नांशभागित्वमित्याह यदि स्यादन्यजातीयो गृहीतोऽपि सुतः क्वचित्। अंशभाजं न तं कुर्य्यात् शौनकस्य मतं हि तत्। इत्युक्तप्रायमित्यास्तां विस्तरः।

रम्येषा चन्द्रिका दत्तपद्धतेर्दर्शिका लघु।
मनोरमा सन्निवेशैरङ्गिणां धर्मतारपिः॥

इति महामहोपाध्यायश्रीकुवेरकृता दत्तकचन्द्रिका समाप्ता।

---

विधानको दत्तकादिस्थ इति यावत्। तस्यैव चौरसस्य कृतविधानकदत्तकादेश्च सद्धनं स्वं स्वत्वास्पदीभूतं भवतीति शेषः। मनुरिति। विवाहविधिरिति।—कन्या स्वधनव्ययेन विवाहनीय इत्यर्थः। विवाहविधिभाजमित्युपलक्षणं ग्रासाच्छादनभाजमपि कुर्य्यात् सर्वेषामपि तु न्याय्य दातुं शक्तया मनीषिणः। ग्रासाच्छादनमत्यन्तं पतितोच्छादद्भवेदित्यस्य समाम्नायत्वात्। अपरञ्च विशेषोऽस्मत्कृतायां दत्तकमीमांसाटीकायां द्रष्टव्य इति। सुत इत्यनेन तस्य पुत्त्रत्वमुत्पद्यत एव किन्तु यज्ञाद्यौर्द्ध्वदेहिकक्रियाधिकारित्वाभावेनोपकाराभावात् नांशभागित्वम् उपकारस्य धनाधिकारप्रयोजकत्वादितिभावः। अंशभाजमित्यनेन ग्रासाच्छादनदानमस्त्येवेति सूचितं पूर्वोक्तवचनाच्चेति।

रम्येति। एषा चन्द्रिका मत्कृतिरूपा 'रम्या' रमणीया इत्यर्थः। रमणीयत्वे हेतुमाह दत्तेति। दत्तपद्धतेर्दत्तकविधानपद्धत्या लघु शीघ्रं दर्शिका प्रकाशिका इत्यर्थः। अन्यचन्द्रिका विलम्बेन दर्शिका इयन्तु लघु दर्शिका इति भावः। 'सन्निवेशैः' सम्यगभिनिवेशैः। 'रङ्गिणाम्'

उत्साहिना। 'मनोरमा' चित्ताकर्षिणी। 'धर्मसारणि' दत्तकविषयकधर्मस्य उद्धारिणी इत्यर्थः। श्रीरघुमणिविद्याभूषणकृतिरियम् इति प्रसिद्धि अस्मिन् श्लोके तन्नामोत्कीर्त्तनप्रसिद्धिश्च। प्रथमचरणप्रथमाक्षरद्वितीयश्लोकाक्षरतृतीयप्रथमचतुर्थश्लोकाक्षरैः रघुमणिरिति नामोद्धृतञ्च इदमसाध्यं न रोचते इति।

क्व यस्य सदुरूहवाक्यघटितस्यार्थे गुरुः सर्वथा
टीका त्वर्थविसंयुता क्वचन मे बालप्रलापोपमा।
सद्भिः कौतुकबुद्धितः किमिति सा नो दृश्यते सादरं
तेनैषार्थवती कृतिर्मम भवेत् प्रार्थ्यं विदां बोध्यम्॥

इति श्रीभरतचन्द्रशिरोमणिविरचिता दत्तकचन्द्रिकाया बाल-संबोधिनी नाम टीका समाप्ता।



সঙ্কীর্ত্তনের নিমিত্ত বিজাতীয় পুত্রও গ্রহণ করিতে পারে কিন্তু ঐ পুত্র গ্রহীতার ধনাধিকারী ও শ্রাদ্ধাধিকারী হইতে পারে না কেবল গ্রাসাচ্ছাদন পাইতে পারিবে ৫।১৯।

ব্রাহ্মণের আদিপুরুষকে গোত্র বলে এইনিমিত্ত ক্ষত্রিয়াদির তাহা সম্ভব হয় না বটে তথাপি পুরোহিতের গোত্রই তাহাদিগের গোত্র ৬।১০। আসন্নসপিণ্ডের মধ্যে ভ্রাতুষ্পুত্রকে অগ্রে লইবে তৎসত্ত্বে অন্যপুত্রগ্রহণ নিষিদ্ধ, গৃহীত হইলে অসিদ্ধ নহে বটে কিন্তু তজ্জন্য গ্রহীতা পাপী হয় এবং সেই পুত্রও প্রশস্ত হইবে না ৬।১৫। অন্য পুত্রগ্রহণের ন্যায় ভ্রাতুষ্পুত্র গ্রহণবিষয়েও বিধানের আবশ্যক তদ্ব্যতিরেকে পুত্রত্বসিদ্ধি হয় না ৭।৩। অপুত্রা স্ত্রী সপত্নীপুত্রসত্ত্বে দত্তকান্তর গ্রহণ করিতে পারে না করিলে অসিদ্ধ ৯।২। অকৃতদার এবং বিবাহোত্তর যাহার স্ত্রীবিয়োগ হইয়াছে তাহারাও দত্তকগ্রহণ করিতে পারে ১।১০। বহুপুত্রক ব্যক্তি পুত্র দান করিতে পারে কিন্তু দ্বিপুত্রক ব্যক্তি ও একপুত্রক ব্যক্তি পুত্র দান করিতে পারে না। একপুত্রক ব্যক্তি ঐ পুত্রকে দ্ব্যামুষ্যায়ণ করিতে পারে ৯।১৪। কিন্তু যে কোন ব্যক্তি হউক জ্যেষ্ঠপুত্র দান করিতে পারে না দান করিলে তাহা অসিদ্ধ। কারণ জ্যেষ্ঠপুত্র শ্রাদ্ধাধিকরণে মুখ্য হয়। ভর্ত্তার অনুমতিতে স্ত্রীলোকও পুত্র দান করিতে পারে। পতি দূরস্থ থাকিলে কিম্বা পতির মৃত্যুতে স্বামীর বিনা অনুমতিতেও পুত্রদান করিতে পারে ১০।২।

পুত্রগ্রহণকালে রাজা এবং জ্ঞাতিবর্গকে ব্যবহারসৌকর্য্যের নিমিত্ত জানাইতে হইবে ১০।১৩। রাজা দূরে থাকিলে অন্ততঃ গ্রামস্বামীকে জানাইবে। কোন কারণবশতঃ রাজা

এবং। জ্ঞাতিকে জানান না হইলেও। পুত্রত্বের অসিদ্ধি হয় না। শূদ্র দৌহিত্র ও ভাগিনেয়কে দত্তক করিতে পারে কিন্তু ব্রাহ্মণাদি পারে না ৩।৮। যাহার মাতাতে নিয়োগ দ্বারা পুত্রোৎপত্তি করিতে পারে এমন সপিণ্ডসন্তানকে সকল বর্ণই দত্তক করিতে পারে বিরুদ্ধসম্পর্কীয় সন্তানকে কেহ দত্তক করিতে পারে না ১০।১১। শৌনকবশিষ্ঠাদ্যুক্ত যে কোন বিধানে পুত্রগ্রহণ করিলে পুত্রত্বসিদ্ধি হয় ১২। ৯। গ্রহীতা যদি ব্রাহ্মণ হয় তবে আচার্য্যকে যথাশক্তি দক্ষিণা দিবে ১২। ১০। রাজা সমুদয়রাজ্যে একবৎসরের যত করআদায় হয় তাহার অর্দ্ধেক দক্ষিণা দিবেন ১২।১২। বৈশ্যের মুখ্যকল্প তিনশত সুবর্ণদক্ষিণা, মধ্যমকল্প তিন শত রৌপ্যমুদ্রা দক্ষিণা, ন্যূনকল্প ৩০০ পয়সা দক্ষিণা এবং শূদ্রের একবর্ষের বেতন ১২। ১৭। অসমর্থ হইলে সকলেই শক্ত্যনুসারে দক্ষিণা দিবে। তিত্তিরিশাখিরা বৌধায়নোক্তবিধানদ্বারা পুত্র গ্রহণ করিবে ১২। ১৮। উক্ত শাস্ত্রীয় বিধান ব্যতিরেকে গৃহীত পুত্র সিদ্ধ হইবে না কেবল-মাত্র গ্রাসাচ্ছাদনভাগী ও বিবাহযোগ্য হইবেক ১৩। ১৪।

গ্রহণের পরক্ষণেই গ্রহীতার পুত্রত্বসিদ্ধি হয় একজন্য গ্রহণের পূর্ব্বে জনক যে সকল সংস্কার করিয়া থাকেন সে সকল সংস্কার গ্রহীতাকে করিতে হইবে না অবশিষ্ট সংস্কারমাত্র করিতে হইবে ১৪। ৩। সংস্কার শরীরশুদ্ধিজনকব্যাপার এ জন্য যদি জনক পূর্ব্বকর্ত্তব্য সংস্কার সম্পাদন না করিয়া থাকেন গ্রহীতা সে সকল সংস্কার সমাধা করিবেন ১৫। ২।

উপনয়নমাত্র সংস্কারেও পুত্রত্বসিদ্ধি হয়। শূদ্রের বিবাহ মাত্র সংস্কারেই পুত্রত্বসিদ্ধি। উপনয়নমাত্র সংস্কারে যে

পুত্রত্ব হয় ১৫। ৩। তাহা ব্রাহ্মণাদি তিন বর্ণের পক্ষে ১৫। ৫। পুত্র পরিগ্রহবিষয়ে উপনয়নের মুখ্য কালই ধরিতে হইবে অর্থাৎ ব্রাহ্মণের গর্ভাষ্টমবর্ষে ক্ষত্রিয়ের গর্ভৈকাদশে বৈশ্যের গর্ভদ্বাদশে। ইহার পরে অসংস্কৃত পুত্রগ্রহণ করিলেও পুত্রতা সিদ্ধ নহে। কৃতচূড়পুত্র গ্রহণ করিতে হইলে পুত্রেষ্টির আবশ্যকতা অকৃতচূড় গ্রহণে পুত্রেষ্টির আবশ্যকতা নাই। পুত্রেষ্টি কেবল ব্রাহ্মণাদি তিন বর্ণের পক্ষে বিহিত ১৮। ৭। সুতরাং শূদ্রের পক্ষে সংস্কারমাত্রেই পুত্রত্ব সিদ্ধি ১৮। ৮।। শূদ্র অকৃতদার ষোড়শবর্ষীয় বালককেও দত্তক করিতে পারে তাহার পর গ্রহণ করিতে পারে না। ১৭। ৯।

কৃতচূড় পুত্র গ্রহণে 'এপুত্র আমাদিগের উভয়েরই পুত্র হইবে' যদি এরূপ অভিসন্ধি থাকে তবে ঐ পুত্র দ্ব্যামুষ্যায়ণ হইবে অভিসন্ধি থাকিলেও অকৃতচূড় পুত্র দ্ব্যামুষ্যায়ণ হইতে পারে না।

দত্তককর্তৃকশ্রাদ্ধনির্ণয়।

দত্তকগ্রহণানন্তর ঔরস উৎপন্ন হইলে গ্রহীতার আদ্যাদি সপিণ্ডীকরণান্ত ষোড়শপ্রকার শ্রাদ্ধে ঐ ঔরসেরই অধিকার তৎসত্ত্বে দত্তকের অধিকার হয় না ২২। ৩। অন্য সকল প্রকার শ্রাদ্ধে ঔরস ও দত্তক উভয়েরই অধিকার হয় ২২। ৬। ক্ষয়াহে অর্থাৎ মৃততিথিতে সাগ্নিক ঔরস ও ক্ষেত্রজ পুত্রই পার্ব্বণ করিবেক ২২। ৭। অন্যপুত্র একোদ্দিষ্টবিধানে শ্রাদ্ধ করিবেক। নিরগ্নির সর্ব্বদাই একোদ্দিষ্টবিধানে শ্রাদ্ধ ব্যবস্থা ২২। ১৩। গ্রহীত্রীমাতার পিত্রাদি শুদ্ধ দত্তকের

মাতামহাদি হইবে। ২২। ১৭। দ্ব্যামুষ্যায়ণের গ্রহীত্রীমাতার পিত্রাদি এবং জননীর পিত্রাদি মাতামহাদি হইবে। অকৃত দার এবং বিবাহানন্তর যাহার স্ত্রী মরিয়াছে তদ্গৃহীত দত্তকের মাতামহ পক্ষ থাকিবে না।

দত্তক সাপিণ্ড্য-নির্ণয়।

জনককুলে অবয়বান্বয়সাপিণ্ড্য গ্রহীতৃপক্ষে পিণ্ডদানান্বয়ে ত্রৈপুরুষিকসাপিণ্ড্য অর্থাৎ গ্রহীতার পিতামহের পিতামহ প্রভৃতি পুরুষত্রয়ে সাপিণ্ড্যনিবৃত্তি। ২৮। ৫।

দত্তকের অশৌচনির্ণয়।

জনককুলের জননমরণে দত্তকের অশৌচ হয় না। ২৭। ১০। এবং জনকাদিরও তদ্রূপ। দ্ব্যামুষ্যায়ণ দত্তকের উভয়কুলে অশৌচ হইবে ২৭। ১১। সগোত্রসপিণ্ড দত্তকের গ্রহীতার মরণে সামান্য সাপিণ্ড্যনিমিত্ত দশরাত্রাশৌচ হইবে। কারণ সপিণ্ডদত্তকে কি অশৌচ হইবে এমন আকাঙ্ক্ষা হয় না এজন্য সামান্য সাপিণ্ড্যনিমিত্ত দশরাত্রাশৌচ না হইবার কোন সম্ভাবনা নাই। অন্যত্র ত্রিরাত্রাশৌচ। দত্তকের জননমরণে দত্তজননাদিকালভেদে অশৌচভেদ হইবে না। ২৮। ২। দত্তকের মরণমাত্রেই ত্রিরাত্রাশৌচ হইবে। দত্তকগ্রহণের পর যদি ঔরসপুত্র জন্মে তবে ঐ জ্যেষ্ঠদত্তক থাকিতেও যদি বয়ঃকনিষ্ঠ ঔরস বিবাহাদি করে তবে জ্যেষ্ঠ কনিষ্ঠের পরিবেদনাদিনিমিত্ত দোষ হইবে না ২৮। ৪। দত্তকের জনক পক্ষে সপ্তপুরুষ এবং মাতামহপক্ষে পাঁচপুরুষ সপিণ্ড বিবাহবিষয়ে ত্যাজ্য হইবেক ২১। ২।

দত্তকের ধনবিভাগব্যবস্থা। ২৯।৫।

দত্তকগ্রহণানন্তর, যদি ঔরসপুত্র জন্মে তবে গুণবান্ দত্তক তৃতীয়ভাগ এবং নির্গুণ দত্তক চতুর্থভাগ পাইবে ৩২।৭। দত্তক যেমন পিতার ধনে অধিকারী তদ্রূপ পিতামহাদি এবং মাতামহাদি বন্ধুর ধনেও অধিকারী হয় ৩২। ১৮। ইহা দত্তকচন্দ্রিকার মতে বোধ হয় বটে কিন্তু অনেক মুনিবচনে যদ্যপি পুর্ব্বষট্কমধ্যে দত্তকের গণনা করেন নাই তথাপি সকল স্মৃতি হইতে মনুস্মৃতির প্রাধান্য মনু পুর্ব্বষটক মধ্যে দত্তকের গ্রহণ করিয়াছেন এবিধায় নিবন্ধৃরা এই ব্যবস্থা স্থির করিয়াছেন যে দত্তক সগোত্রবন্ধুর ধন পাইতে পারিবেন ভিন্নগোত্রবন্ধু মাতামহাদির ধনে অধিকারী হইবেন না। তদনুসারে আদালত পর্য্যন্তও এই ব্যবস্থা চলিতেছে এবং এরূপ মীমাংসায় সকল বচনের সমাধাও হইয়া উঠে যে, যেযে মুনি দত্তককে বন্ধুদায়াদ বলেন নাই সে বন্ধু অসগোত্রবন্ধু অর্থাৎ মাতামহাদিরূপ বন্ধু জানিবে। আর যে যে মুনি বন্ধুদায়াদ রূপে দত্তককে পরিগণিত করিয়াছেন সে সগোত্রবন্ধু পিতামহভ্রাতৃপ্রভৃতি জানিবে ইহার প্রমাণ ২১৪ পৃষ্ঠা মনু সংহিতার ১৫৮ সংখ্যক শ্লোকের টীকায় দৃষ্টি করিলে পাইবে। পিতৃধনে হউক বা পিতামহাদিধনেই হউক দত্তক পুত্র, পৌত্র, প্রপৌত্র আপন যোগ্যাংশ অর্থাৎ তৃতীয় বা চতুর্থ অংশ মাত্র পাইবে ৩৩।৩০। ঔরসপুত্র পৌত্র প্রপৌত্রের সমানাধিকারী হইতে পারিবে না ৩২।৬। ঔরসসত্বেও দত্তক রাজ্যের যোগ্যাংশ পাইতে পারিবে বটে কিন্তু রাজ্য নিয়োজনে অধিকারী হইতে পারি-

বেক না ৩৩। ৭। তাহাতে কেবল ঔরসেরই অধিকার। দত্তকের তৃতীয়াংশ চতুর্থাংশ পাইবার যে ব্যবস্থা সে কেবল ব্রাহ্মণাদিবর্ণত্রয়ের পক্ষে জানিবে। শূদ্রের পক্ষে নহে। পিতার সত্ত্বে শূদ্রের দাসীপুত্র ঔরসপুত্রের তুল্যাংশ পায় ৩৫। ৭। পিতার মরণোত্তর দাসীপুত্র ঔরসের তৃতীয়াংশ পায় ৩৬। ৮। ঔরসপুত্র না থাকিলে দাসীপুত্র, স্ত্রী, কন্যা দৌহিত্রসত্ত্বে ক্রমে তাহাদিগের তুল্যাংশী হয় ৩৭। ১। এই নিমিত্ত ঔরসসত্ত্বে পিতার জীবদ্দশায় দত্তক ঔরসের তুল্য ভাগ পাইবে তদভাবে ঔরসের তৃতীয় ভাগ পাইবেক। যদি জনক গ্রহীতার ঔরস না থাকে তবে দ্ব্যামুষ্যায়ণ দত্তক সমস্ত ধনে অধিকারী হয় ৩৭। ১২। ঔরসসত্ত্বে গৃহীতদত্তক অধিকারী নয় ৩৭। ১৩। গ্রহণের পর উভয়ের ঔরস জন্মিলে জনকের ধনে ঐ দত্তক ঔরসের তৃতীয়াংশভাগী হয় ৩৮। ১। আর গ্রহীতার ধনে গুণবান্ দত্তকের ষষ্ঠাংশভাগিত্ব নির্গুণদত্তকের অষ্টমাংশভাগিত্ব ৩৮। ২। অন্ধ, পঙ্গু প্রভৃতি অনধিকারী পুত্রের ঔরস, ক্ষেত্রজ পুত্রই পিতামহাদির ধনে অধিকারী হয়। উহাদিগের গৃহীত দত্তকাদি পুত্র অধিকারী নহে ৩৮। ৭। অন্ধাদির ভার্য্যা ভক্তাচ্ছাদন পাইবে ৩১। ৫। কন্যারা বিবাহপর্যন্ত গ্রাসাচ্ছাদন পাইবেক ৩১। ৬। অন্ধ প্রভৃতি পর্য্যন্ত পুত্র থাকিতেও দত্তক পুত্র করিতে পারে। কারণ পিণ্ডোদকাদি দান জন্য পুত্রগ্রহণ করিবার আবশ্যক, অন্ধাদিপুত্রের পিণ্ডাদিদানে অধিকার নাই।

---

# দত্তকগ্রহণপ্রয়োগঃ।



গ্রহণাৎ পূর্ব্বদিনে কৃতোপবাসঃ পরদিনে কৃতনিত্য-ক্রিয়ো যজমানঃ কুশহস্ত আচম্য বিষ্ণুং স্মৃত্বা নারায়ণায় গন্ধপুষ্পং দত্ত্বা স্বস্তিবাচনং কুর্য্যাৎ। ওঁ কর্ত্তব্যেঽস্মিন্ পুত্র-প্রতিগ্রহকর্ম্মণি ওঁ পুণ্যাহং ভবন্তো ব্রুবন্তু। ওঁ পুণ্যাহং ইতি প্রতিবচনং ব্রাহ্মণঃ ত্রিঃ ব্রূয়াৎ। এবং ঋদ্ধিং স্বস্তিঞ্চ। প্রতি-বচনে তু ঋদ্ধ্যতাং। স্বস্তীতি ত্রিঃ ব্রূয়াৎ। শূদ্রস্তু কেবলং স্বস্তি ভবন্তো ব্রুবন্তু ইত্যেবং ব্রূয়াৎ। ব্রাহ্মণঃ স্বস্তীতি প্রতিবচনং বদেৎ। ততঃ সামবেদী ব্রাহ্মণঃ ওঁ স্বস্তি সোমোঽয়ং সুতঃ পিবন্তোঽস্য মরুতঃ উতোনা বাজোঽশ্বিনা আদিত্যং বিষ্ণুং সূর্য্যং ব্রহ্মাণঞ্চবৃহস্পতিং ওঁ স্বস্তি ৩। যজুর্ব্বেদী তু স্বস্তি ন ইন্দ্রো বৃদ্ধশ্রবা স্বস্তি নঃ পূষা বিশ্বদেবাঃ স্বস্তি ন স্তার্ক্ষ্যোঽরিষ্ট-নেমিঃ স্বস্তি নো বৃহস্পতির্দধাতু ওঁ স্বস্তি ৩। ইতি পঠিত্বা অক্ষতান্ বিকিরেৎ। ততঃ কৃতাঞ্জলিঃ। ওঁ সূর্য্যঃ সোমো যমঃ কালঃ সন্ধ্যে ভূতান্যহঃক্ষপা পবনো দিক্‌পতির্ভূমিরাকাশং খচরামরাঃ ব্রাহ্ম্যং শাসনমাস্থায় কল্পধ্বমিহ সন্নিধিং। ততঃ এতে গন্ধপুষ্পে ওঁ আদিত্যাদিনবগ্রহেভ্যো নমঃ এবং গণেশাদিপঞ্চদেবতা ইন্দ্রাদিদিক্‌পালান্ গুরুং ব্রাহ্মণান্ পূজয়েৎ। ততঃ সঙ্কল্পং কুর্য্যাৎ। শ্রীবিষ্ণুরোংতৎসদদ্য অমুকে মাসি অমুকে পক্ষে অমুকতিথৌ অমুকগোত্রঃ শ্রীঅমুকদেবশর্ম্মা (শূদ্রস্তু) অমুক দাসঃ অপ্রজাঽহপুত্রকপৈতৃক-ঋণাপাকরণ-

পুন্নামনরকত্রাণদ্বারা শ্রীপরমেশ্বরপ্রীত্যর্থং আত্মবংশরক্ষার্থঞ্চ মনু বৃহস্পতি-বশিষ্ঠ-শৌনক-পরাশরাদিঋষিবাক্যানুসারেণ স্বশাখোক্তবিধিনা পুত্রপ্রতিগ্রহমহং করিষ্যে ইতি সঙ্কল্প্য তৎ সূক্তং পঠেৎ। যথা সামবেদী তু দেবো বো দ্রবিণোদা পূর্ণা বিবষ্টাসিচং উদ্বা সিঞ্চধ্বমুপবা পৃণুধ্বমাদিদ্বো দেবো হতে। যজুর্ব্বেদী তু ওঁ যজ্জাগ্রতো দূরমুদেতি দৈবং তদুসুপ্তস্য তথৈবেতি দূরং গমং জ্যোতিষাং জ্যোতিরেকং তন্মে মনঃ শিবসঙ্কল্পমস্তু। সঙ্কল্পিতার্থাঃ সিদ্ধাঃ সন্তু মনোরথাঃ। শত্রুণাং বুদ্ধিনাশায় মিত্রানামুদয়ায় চ। অয়মারম্ভঃ শুভায় ভবতু। ততঃ সর্ব্ববিঘ্নবিঘাতার্থং গণপতিং পাদ্যাদিভিঃ সম্পূজ্য ব্রাহ্মণং হোতারং আচার্য্যং সদস্যঞ্চ ব্রূয়াৎ।

কর্ত্তা, ওঁ সাধু ভবানাস্তাং। ব্রাহ্মণঃ ওঁ সাধ্বহমাসে। কর্ত্তা, ওঁ অর্চ্চয়িষ্যামো ভবন্তং, ব্রাহ্মণঃ ওঁ অর্চ্চয়। ততো বস্ত্রালঙ্কারাদিভিঃ দূর্ব্বাকতৈ দক্ষিণং জানুং প্রগৃহ্য বিষ্ণুরোং তৎসদদ্য অমুকে মাসি অমুকে পক্ষে অমুকতিথৌ মৎসঙ্কল্পিত শৌনকাদ্যুক্তবিধিনা পুত্রগ্রহণকর্ম্মণি ব্রহ্মকর্ম্মকরণায় অমুক গোত্রং শ্রীঅমুকদেবশর্ম্মাণং এভিঃ পাদ্যাদিভির্ভার্চ্চ্য ভবন্তমহং বৃণে। ব্রাহ্মণঃ ওঁ বৃতোঽস্মি (কর্ত্তা) যথাবিহিতং ব্রহ্মকর্ম্ম কুরু। ব্রাহ্মণঃ ওঁ যথাজ্ঞানং করবাণি। এবং হোত্রাদিকং বরয়েৎ। ততো হোতা বেদ্যুপরি উপবিশ্য পঞ্চগব্যং শোধয়েৎ।

তত্র সামবেদী তু। গায়ত্র্যা গোমূত্রং। গাবশ্চেদ্‌ঘাসমন্ত্রব ইতি গোময়ং। গবা সুনোঽসাসুনেতি দুগ্ধং। দধিক্রাব্ন ইতি দধি। ঘৃতবতীতি ঘৃতং। দেবস্য ইতি কুশোদকং।

যজুর্ব্বেদী তু গায়ত্র্যা গোমূত্রং। ওঁ গন্ধদ্বারাং দুরাধর্ষাং

নিত্যপুষ্টাং করীষিণীং ঈশ্বরীং সর্ব্বভূতানাং তামিহোপহ্বয়ে শ্রিয়ং। ইতি গোময়ং। ওঁ আপ্যায়স্ব সমেতু তে বিশ্বতঃ সোম বৃষ্ণ্যং ভবাবাজস্য সঙ্গথে। ইতি দুগ্ধং। ওঁ দধিক্রাব্ণোঽকার্ষং জিষ্ণোরশ্বস্য বাজিনঃ সুরভিনোমুখাকরৎ প্রণআয়ুংষি তারিষৎ। ইতি দধি। ওঁ তেজোসি শুক্রমস্যামৃতমসি। ধামনামাসি প্রিয়ংদেবানামনাধৃষ্টং দেবযজনং। ইতি ঘৃতং। ওঁ দেবস্য ত্বা সবিতুঃ প্রসবেঽশ্বিনো র্বাহুভ্যাং পুষ্ণোঃ হস্তাভ্যামাদদে ইতি কুশোদকং।

ইত্যাদিনা পঞ্চগব্যং শোধয়িত্বা প্রণবেণ সর্ব্বমেকীকৃত্য বেদীং শোধয়েদনেন মন্ত্রেণ ওঁ বেদ্যবেদিঃ সমাপ্যতেবর্হিষাবর্হিরিন্দ্রিয়ম্। যুপেনযুপআপ্যায়তে প্রণীতোঽগ্নিরগ্নিনা। ততো বেদ্যাঃউপরি চন্দ্রাতপং বন্ধীয়াদনেন মন্ত্রেণ ওঁ ঊর্দ্ধঊষণ উতয়ে তিষ্ঠাদেবো নঃ সবিতা॥ ঊর্দ্ধোবাজস্য সনিতা যদঞ্জিভির্ব্বাঘাভিবিহ্বয়ামহে॥ ততোবেদ্যাঃ পূর্ব্বে পঞ্চঘটানারোপ্য বস্ত্রেনাচ্ছাদ্য মধ্যস্কতৈতুর্বয়িত্বা ঘটং স্থাপয়েৎ॥ যথা ওঁ ভূরসি ভূমিরস্তেতি মন্ত্রেণ ভূমিং। ওঁ ধান্যমসীতি মন্ত্রেণ ধান্যং। ওঁ আজিঘ্রকলসমিতিমন্ত্রেণ কলসং। ওঁ ধন্বনাগেতি মন্ত্রেণপল্লবং। ওঁ যাঃফলিনীরিতিমন্ত্রেণ ফলং। ওঁ সিন্ধোরিবেতি মন্ত্রেণ সিন্দুরং। ওঁ বরুণস্যোত্তম্ভনমসীতি ইতি মন্ত্রেণ জলং। ওঁ শ্রীশ্চতে ইতিমন্ত্রেণ পুষ্পং সর্ব্বতীর্থোদ্ভবং বারি সর্ব্বদেবসমন্বিত। ইমং ঘটং সমারুহ্য তিষ্ঠ দেব গণৈঃ সহ ওঁ স্থিরোভববীড়ঙ্গআশুর্ভব পৃথুর্ভব সাহর্ব্বসুমুপ্সয়ন্তয়ে প্রণীয়বাহন। ওঁ স্থাংস্থীং স্থিরোভব ইতিস্থিরীকরণং॥ ততোবেদ্যাঈশানে শান্তিকলসমারোপ্য

তত্রপঞ্চরত্নানি নিঃক্ষিপ্য বস্ত্রযুগ্মেনাচ্ছাদ্য দধ্যক্ষতেন ভূষয়িত্বা ওঁ বরুণস্যোত্তম্ভনমসি বরুণস্য স্কম্ভ সর্জ্জনীস্থ বরুণস্যঋত সদ-ন্যসি বরুণস্য ঋত সদনমসি বরুণস্য ঋত সদনীমাসীদ ইতি মন্ত্রেণ জলেন পূরয়েৎ ॥ ততোবেদীমধ্যে পঞ্চবর্ণগুণ্ডিকয়া সর্ব্ব-তোভদ্রমণ্ডলং অথবাষ্টদলপদ্মং নির্ম্মায় তন্মধ্যে শালগ্রামশিলাং তত্তদ্দেবতারূপস্বর্ণময়ীং প্রতিমাম্বা সংস্থাপ্য পূজয়েৎ ॥ তত্র ক্রমঃ ।' তত্রাদৌ সামান্যার্ঘ্যভূতশুদ্ধ্যাদিকং বিধায় পূজয়েৎ ॥ ততঃ প্রথমঘটে গণেশং ধ্যাত্বাবাহ্য দশোপচারৈঃ পঞ্চো-পচারৈর্ব্বা পূজয়েৎ ॥। দ্বিতীয়ঘটে সূর্য্যং ধ্যাত্বাবাহ্য পূজয়েৎ ॥ তৃতীয়ঘটে বিষ্ণুংধ্যাত্বাবাহ্যপূজয়েৎ ॥ চতুর্থঘটে শিবংধ্যাত্বাবাহ্য পূজয়েৎ পঞ্চমঘটে দুর্গাং ধ্যাত্বাবাহ্য পূজয়িত্বা তত্রৈব আদিত্যা-দিনবগ্রহান্ ইন্দ্রাদিদশদিকপালাংশ্চ পৃথক্পৃথগাবাহ্য পূজয়েৎ ॥ ততঃ শান্তিকলসে বরুণং ধ্যাত্বাবাহ্য যথাশক্ত্যুপচারৈঃ পূজ-য়েৎ । ততোগণপতিং প্রজাপতিং বিষ্ণুং ধর্ম্মঞ্চ ষোড়শোপচারৈঃ পূজয়েৎ । তত্রাদৌ গণপতিং পূজয়েৎ । ধ্যানং যথা ওঁ খর্ব্বং স্থূলতনুং গজেন্দ্রবদনং লম্বোদরং সুন্দরং প্রস্যন্দন্মদগন্ধলুব্ধ-মধুপব্যালোলগণ্ডস্থলং দন্তাঘাতবিদারিতারিরুধিরৈঃ সিন্দূর শোভাকরং বন্দে শৈলসুতাসুতং গণপতিং সিদ্ধিপ্রদং কামদং॥ ইতিধ্যাত্বা স্বশিরসি পুষ্পং দত্বা বিশেষার্ঘ্যং কৃত্বা পুনর্ধ্যাত্বা শালগ্রামে প্রতিমায়াম্বা পুষ্পং দত্বা ওঁ ভূর্ভুবঃ স্বর্ভগবন্ গণপতে ইহা গচ্ছ ইহাগচ্ছ ইহ তিষ্ঠ ইহ তিষ্ঠ ইহ সন্নিধেহি ইহ সন্নিরুদ্ধস্ব মম পূজাং গৃহাণ ইত্যাদিনাবাহ্য ষোড়শোপচারৈঃপূজয়েৎ ॥*

* উপচারাধিপতয়ো দেবতাঃ যথা,—আসনে চন্দ্রমসে নমঃ এবং ক্রমেণ পাদ্যে বরুণায় অর্ঘ্যে নিঋতয়ে, আচমনীয়ে বরুণায়, মধুপর্কে

চারৈঃ পূজয়েৎ। যথা ওঁ পিতৃভ্যো নমঃ। ৫। ওঁ কুলদেবতাভ্যো নমঃ। ৬। ওঁ গুরুভ্যো নমঃ। ৭। ওঁ অগ্নয়ে নমঃ। ৮। ওঁ সূর্য্যাবিত্রো নমঃ। ৯। ওঁ বায়বে নমঃ। ১০। ওঁ সূর্য্যায় নমঃ। ১১। ওঁ প্রজাপতয়ে নমঃ। ১২। ওঁ সোমায় নমঃ। ১৩। ওঁ দিবে নমঃ। ১৪। ওঁ পৃথিব্যৈ নমঃ। ১৫। ওঁ ভূর্নমঃ। ১৬। ওঁ ভুবর্নমঃ। ১৭। ওঁ স্বর্নমঃ। ১৮। ওঁ ভূর্ভুবঃ স্বর্নমঃ। ১৯। ওঁ অগ্নয়েস্বিষ্টিকৃতে নমঃ। ইতি পূজয়িত্বা স্বগৃহ্যোক্তবিধিনা কুণ্ডস্থণ্ডিলে বাপি বহ্নিস্থাপনং কৃত্বা হোমং কুর্য্যাৎ।

অত্র প্রদর্শনার্থং যজুর্ব্বেদোক্তকুশণ্ডিকা লিখ্যতে।

তত্র পবিত্রতমভূমৌ চতুর্হস্তমিতং স্থণ্ডিলং কৃত্বা গোময়েনোপলিপ্য কুশসহিতাসনে উপবিষ্টঃ কর্ত্তা উত্তরস্যাং দিশি অভ্যুক্ষণার্থং কুশকুসুমসহিতং জলপাত্রং ভূমৌ নিধায়, দক্ষিণং জানু ভূমৌ পাতয়িত্বা দক্ষিণহস্তানামিকাঙ্গুষ্ঠাভ্যাং কুশপত্রমেকং শঙ্কাকারকাষ্ঠং গৃহীত্বা বা তন্মূলেন প্রাদেশমাত্রপ্রমাণপ্রাগগ্ররেখাত্রয়ং কৃত্বা অঙ্গুষ্ঠানামিকাভ্যাং রেখাস্থৎকরং গৃহীত্বা ঐশান্যাং দিশি ওঁ নিরস্তঃ পরাবসুরিতি মন্ত্রেণ নিক্ষিপেৎ।

ততঃ পূর্ব্বস্থাপিতজলেন রেখাভ্যুক্ষণং কৃত্বা অগ্নিদক্ষিণে কাংস্যপাত্রস্থং নবশরাবস্থং বা অগ্নিমানীয় তস্মাজ্জ্বলদিন্ধনং গৃহীত্বা ওঁ ক্রব্যাদমগ্নিং প্রহিণোমি দূরং যমরাজ্যং গচ্ছতু রিপ্রবাহ ইতি মন্ত্রেণ ক্রব্যাদংশং নৈর্ঋত্যাং দিশি প্রক্ষিপ্য পরমগ্নিং গৃহীত্বা ওঁ ইহৈবায়মিতরো জাতবেদা দেবেভ্যো হব্যং

পূর্ব্বাভিমুখ উপবিশ্য প্রণীতাপাত্রং সব্যহস্তেন দক্ষিণহস্তেন
জলৈরাপূর্য্য কুশৈরাচ্ছাদ্যাগ্নেরুত্তরে আস্তরণীয়স্থানাদ্বহির্ব্র-
হ্মণোমুখমবলোক্য স্থাপয়েৎ। ততঃ সকৃদাচ্ছিন্নকুশৈরাস্ত-
রণং। যথা পূর্ব্বস্যাং আগ্নেয়াদীশানান্তং দক্ষিণস্যাং ব্রহ্ম-
ণোঽগ্নিপর্য্যন্তং পশ্চিমস্যাং নৈঋতাদ্বায়ব্যান্তং উত্তরস্যাং বায়-
ব্যাদীশানান্তং কুশানাস্তীর্য্য তেষাং মূলান্যগ্রেণাচ্ছাদনং তথৈব
দর্ভত্রয়েণাচ্ছাদয়েৎ। তত আচারাৎ দশদিক্ষু স্বস্তিকান্
দদ্যাৎ। ততোঽগ্নেরুত্তরতঃ পূর্ব্বক্রমেণ প্রয়োজনদ্রব্যাণ্যা-
সাদয়েৎ। তদ্যথা পবিত্রচ্ছেদনার্থং কুশপত্রদ্বয়ং সাগ্রং
প্রোক্ষণীপাত্রং আজ্যস্থালীচরুস্থালীব্রীহির্যবস্তদভাবে তণ্ডুলাঃ
কপিলাদুগ্ধং উদূখলমুষলে বৈণবশূর্পং স্রুবস্রুচৌ জিহ্বাসম্মা-
র্জনকুশাঃ ষট্ উপযমনকুশাস্ত্রয়োদশপালাশসমিধঃ উডুম্বর-
সমিধঃ আজ্যং তিলযবৌ মধুশর্করা অন্যানি হবনীয়দ্রব্যাণি
ব্রহ্মদক্ষিণা পূর্ণপাত্রং হোত্রাদিদক্ষিণা কাঞ্চনং বাসোযুগং তদ-
ভাবে তন্মূল্যং বা। দ্ব্যঙ্গুষ্ঠবিস্তারাগ্রপ্রাদেশপরিমিতোডুম্বর-
নির্ম্মিতা দর্ব্বী সার্দ্ধাঙ্গুষ্ঠবিস্তারাগ্রপ্রাদেশপরিমিতোডুম্বর-
নির্ম্মিতং মেক্ষণং প্রাক্ং প্রাক্ং বিনিয়োগক্রমেণাসাদয়েদিতি।
ততোঽগ্নেঃ পশ্চিমতো দক্ষিণভাগে প্রাগগ্রান্ কুশানাস্তীর্য্য
প্রক্ষালিতবারুণোদূখলমুষলে বৈণবশূর্পঞ্চ বারুণচমসস্থজলং
প্রোক্ষণার্থং সংস্থাপ্য যবান্ তদভাবে ব্রীহ্যাদীন্ বা শূর্পে
নিধায় ওঁ গণপতয়ে স্বাজুষ্টং গৃহ্ণামি ইতি মুষ্টিত্রয়ং গৃহীত্বা
ওঁ গণপতয়ে স্বাজুষ্টং নির্ব্বপামি ইতি উদূখলমধ্যে সংস্থাপ্য
ওঁ গণপতয়ে স্বাজুষ্টং প্রোক্ষামি ইতি বারুণচমসস্থজলেনাভ্যু-
ক্ষয়েৎ ইতি। এবং গ্রহণনির্ব্বপণপ্রোক্ষণরূপসংস্কারত্রয়ং সর্ব্বত্র

কার্য্যং। এবং ওঁ প্রজাপতয়ে, বিষ্ণবে, ধর্ম্মায়, পিতৃভ্যঃ, কুল
দেবতাভ্যঃ, গুরুভ্যঃ, অগ্নয়ে, সূর্য্যাসাবিত্র্যৈ, অগ্নয়ে। বায়বে,
সূর্য্যায়, প্রজাপতয়ে, সোমায়, অন্তরীক্ষায়, দ্যৌ, পৃথিব্যৈ,
ভূঃ, ভুবঃ, স্বঃ, ভূর্ভুবঃ, স্বঃ, অগ্নয়ে স্বিষ্টিকৃতে, দ্বিস্তূষ্ণীং।
২ ২৮। ইত্যষ্টাবিংশতিমুষ্টিং নিরূপ্য উপযস্তদক্ষিণবামপাণিভ্যাং
মুষলেনাবাহত্য সূর্পেণ প্রস্ফোটয়েৎ। এবমপরবারদ্বয়মবহত্য
প্রস্ফোটয়েৎ। তথাকর্ত্তব্যং যথা বারত্রয়েণ তণ্ডুলনিষ্পত্তির্ভবতি।
তদশক্তৌ সংস্কারমাত্রার্থং তণ্ডুলেষ্বপ্যেবং। ততস্তণ্ডুলান্ ত্রিঃ
প্রক্ষাল্য অগ্নিরককৃতোত্তরাগ্রং পবিত্রং চরুস্থাল্যাং নিক্ষিপ্য তত্র
তণ্ডুলান্ নিধায় কপিলাদুগ্ধং নিক্ষিপ্য তদভাবেঽন্যধেনোরপি।
দর্ব্ব্যা প্রাগাদিপ্রদক্ষিণমীষদূর্দ্ধমবঘট্টয়ংস্তথা পচেৎ যথা দাহ-
কাঠিন্যাতিশৈথিল্যমণ্ডগালনরহিতোঽন্তর্ব্বাষ্পশ্চরুর্ভবতি।
ততো পক্কং জ্ঞাত্বা জলচুম্বুকেন স্থালীমধ্যং দৃষ্ট্বা ওঁ
তদ্বিষ্ণোরিতিমন্ত্রেণ ঘৃতেন সিক্ত্বা দর্ব্ব্যা দক্ষিণাবর্ত্তেন
সংমিশ্রয়েৎ। ততোঽগ্নেরুত্তরতোঽবতার্য্য পুনরুল্মুকেন
স্থালীমধ্যং দৃষ্ট্বা পুনর্ঘৃতেনাভিঘারয়েৎ। ততঃ প্রথমতঃ
পূর্ব্বানাদিতপত্রং গৃহীত্বা ওঁ পবিত্রেস্থোবৈষ্ণব্যৌ ইতি মন্ত্রেণ
অনখং ছিত্ত্বা ওঁ বিষ্ণোর্মনসাপূতে স্থ ইতি জলেন সংপ্রোক্ষ্য
প্রোক্ষণীপাত্রে স্থাপয়েৎ। ততঃ প্রোক্ষণীপাত্রে প্রণীতাজলং
নিধায় পবিত্রোঽয়ং দক্ষিণহস্তানামিকাঙ্গুষ্ঠাভ্যাং মূলে চ
বামহস্তানামিকাঙ্গুষ্ঠাভ্যাং গৃহীত্বা দক্ষিণহস্তোপরি ভাবেনাধো-
মুখব্যস্তপাণিঃ পবিত্রমধ্যেন তজ্জলস্য কিঞ্চিদুত্তোলনরূপমুৎ-
পবনং কৃত্বা পবিত্রং দক্ষিণহস্তে নিধায় বামহস্ততলে প্রোক্ষণী-
পাত্রং বিন্যস্য সপবিত্রদক্ষিণহস্তেন প্রোক্ষণীপাত্রস্থজলং

কিঞ্চিদুত্তোল্য পুনস্তত্রৈব প্রক্ষিপ্য আত্মবামে ভূমৌ প্রোক্ষণীপাত্রং স্থাপয়িত্বা কতিপয়প্রোক্ষণীজলেন হবনীয়-দ্রব্যানি সংপ্রোক্ষ্য প্রণীতাদক্ষিণা দক্ষিণভাগে প্রোক্ষণীপাত্রং স্থাপয়েৎ। ততো পবিত্রং প্রণীতামধ্যে স্থাপয়েৎ। ততঃ আজ্যস্থালী আত্মসম্মুখমবতার্য্য তস্যামাজ্যং নিরূপ্য অগ্নাবধি-শ্রিত্য জ্বলদগ্নিং গৃহীত্বা ঈশানাদারভ্য দক্ষিণাবর্ত্তেন আজ্য-স্থালীং ত্রিঃ পরিবেষ্ট্য তদগ্নিং তত্রৈবাগ্নৌ ক্ষিপেৎ। ততঃ স্রুবং গৃহীত্বা অধোমুখমগ্নৌ প্রতাপ্য সম্মার্জ্জনকুশেন মূলাদগ্রং পুনরগ্রান্মূলং যাবৎ সম্মার্জ্য তৎকুশং পরিত্যজ্য পুনঃ স্রুবং প্রতাপ্য প্রণীতাজলেনাভুক্ষ্য প্রোক্ষণ্যুত্তরে স্থাপয়েৎ। ইত্থমেব বারত্রয়ং কুর্য্যাৎ। এবং স্রুগপি সংস্কার্য্যা। ততঃ প্রোক্ষণীপাত্রস্থং পবিত্রমাদায় তস্যাগ্রং দক্ষিণহস্তানা-নিকাঙ্গুষ্ঠাভ্যাং গৃহীত্বা মূলে চ বামহস্তানামিকাঙ্গুষ্ঠাভ্যাং গৃহীত্বা দক্ষিণহস্তোপরি ভাবেনাধোমুখো ব্যস্তপাণিঃ পবিত্র-মধ্যে নাজ্যস্থ কিঞ্চিদুত্তোলনরূপমুৎপবনং কৃত্বা আজ্যমবেক্ষ্য প্রোক্ষণীজলং দত্বা পবিত্রং পূর্ব্ববৎ গৃহীত্বা ওঁ সবিতুর্ব্বঃ প্রসব উৎপুনাম্যচ্ছিদ্রেণ পবিত্রেণ বসোঃ সূর্য্যস্য রশ্মিভিঃ স্বাহা ইত্যনেনোৎপূয় পবিত্রং তত্রৈব স্থাপয়েৎ। ততো বামহস্তেন উপযমনকুশানাদায় পূর্ব্বাগ্রাদিতমনিধমুত্তিষ্ঠন্নগ্নৌ প্রক্ষিপ্য উপবিশ্য প্রোক্ষণীজলেন ওঁ দেবসবিতঃ প্রসুবযজ্ঞং প্রসুব-যজ্ঞপতিং ভগায় দিব্যোগন্ধর্ব্বঃ কেতপূঃ কেতন্নঃ পুনাতু বাচ-স্পতির্ব্বাচন্নঃ স্বদতু ইতি মন্ত্রেণ দক্ষিণাবর্ত্তেনাগ্নিং পর্য্যুক্ষেৎ। ততস্তৎপবিত্রং প্রণীতাসু নিধায় প্রোক্ষণীপাত্রং সংস্রব গ্রহণার্থং অগ্নেরুত্তরে স্থাপয়েৎ। ততো ব্রহ্মণোহন্বারব্ধশরীরঃ

শ্রুবং গৃহীত্বা আধারাজ্যভাগৌ জুহুয়াৎ। তত্রাধারা, প্রজাপতিং মনসা ধ্যায়ন্, ওঁ প্রজাপতয়ে স্বাহা, ইদং প্রজাপতয়ে। অনেন বায়ুকোণাদারভ্যাগ্নিকোণপর্য্যন্তং ঘৃতধারাং দদ্যাৎ। সংস্রবার্থং হুত্বা হুত্বা হবিঃশেষং প্রোক্ষণীপাত্রে স্থাপয়েদিতি। তথৈবাজ্যধারৌ ভাগৌ যথা ওঁ অগ্নয়ে স্বাহা, ইদমগ্নয়ে। অনেনাগ্নের্দক্ষিণতঃ পশ্চিমান্তাৎ পূর্ব্বান্তং যাবৎ ঘৃতধারাং দদ্যাৎ। ওঁ ইন্দ্রায় স্বাহা ইদমিন্দ্রায়। অনেন নিঋর্তিকোণাদারভ্য ঈশানকোণপর্য্যন্তং ঘৃতধারাং দদ্যাৎ। ওঁ সোমায় স্বাহা ইদংসোমায়। অনেনাগ্নেরুত্তরতঃ পশ্চিমান্তাৎ পূর্ব্বান্তং যাবৎ ঘৃতধারাংদদ্যাৎ।

ততঃ পুত্রপ্রতিগ্রহং কুর্য্যাৎ।

ততোগৃহীতা দাতুঃ সমক্ষং আচার্য্যাদিব্রাহ্মণৈঃ সহ গত্বা – স্বয়ং ওঁ পুত্রং দেহীতি ভিক্ষেৎ। ততো দাতা আচম্য বিষ্ণুং স্মৃত্বা নারায়ণগুরুগণেশনবগ্রহান্, গন্ধপুষ্পাভ্যাং সংপূজ্য স্বস্তিবাচনং কুর্য্যাৎ। তণ্ডুলানাদায় ওঁ কর্ত্তব্যেঽস্মিন্ পুত্রদানকর্ম্মণি ওঁ পুণ্যাহং ভবন্তো ব্রুবন্তু। ওঁ পুণ্যাহমিতি বারত্রয়ং ক্রয়াৎ। এবং ঋদ্ধিং স্বস্তিঞ্চ ক্রয়াৎ। ওঁ স্বস্তি নঃ ইন্দ্রোবৃদ্ধশ্রবা স্বস্তি নঃ পূষা বিশ্বদেবাঃ স্বস্তি নস্তার্ক্ষ্যোঽরিষ্টনেমিঃ স্বস্তিনোবৃহস্পতির্দধাতু ইতি পঠিত্বা অক্ষতান্ বিকীর্য্য কৃতাঞ্জলিঃ ওঁ সূর্য্যঃ সোমোযমঃকালঃ সন্ধ্যেভূতান্যহঃ ক্ষপা পবনোদিক্‌পতি ভূর্মিরাকাশং খচরামরা ব্রাহ্মং শাসনমাস্থায় কল্পধ্বমিহ সন্নিধিং ইতি পঠিত্বা নারায়ণং গন্ধপুষ্পাভ্যাং সংপূজ্য সঙ্কল্পং কুর্য্যাৎ। তাম্রাদিপাত্রং জলপূর্ণং কৃত্বা তত্র কুশতিলফলান্যাদায় শ্রীবিষ্ণুরোং তৎ-

শরদঃ শতং। ওঁ হিরণ্যরূপমবসে হনুধ্বং। ওঁ যস্ত্বাহৃদা কীরিণা-
মন্যমানো মর্ত্ত্যং মর্ত্ত্যো যো হবীমি জাতবেদো যশোঽস্মা-
সু ধেহি প্রজাভির্ব্বগ্নেঅমৃতত্বমশ্যাং। ওঁ তুভ্যমগ্রে পর্য্যবহন্
সূর্য্যাং বহতু না সহ। পুনঃ পতিভ্যো জায়াদা অগ্নে প্রজয়া
সহ। ওঁ স্বস্তিনোমিমিতামশ্বিনীভ্যাং স্বস্তি তে ব্যাদি-
তিরনর্ব্বণঃ স্বস্তিপূষা অসুরো দধাতু নঃ স্বস্তি দ্যাবা পৃথিবী
সুচেতনা স্বস্তয়ে বায়ুমুপশ্রুবা মহীনোমং স্বস্তি ভুবনস্যস্পতি
স্বাহা। ইদং সূর্য্যাসাবিত্র্যৈ। পুনর্ব্বদায়। ওঁ গোমো
দদদিত্যাদিঋক্‌পঞ্চকস্য সূর্য্যাসাবিত্রিঋষিঃ সূর্য্যাসাবিত্রী
দেবতা ঘেহনুষ্টুপ্ তিজগতী চতুর্থী ত্রিষ্টুপ্ পঞ্চম্যনুষ্টুপ্ ছন্দঃ
পুত্রপ্রতিগ্রহাদহোমে বিনিয়োগঃ। ওঁ গোমোঽদদদ্ গন্ধর্ব্বায়
গন্ধর্ব্বোঽদদদগ্নয়ে রয়িঞ্চ পুত্রান্ চাদাদগ্নের্মহীযমথো ইদং
স্বাহা। ইতি সূর্য্যাসাবিত্র্যৈ। ১। ও ইহৈব স্তমাবিয়োষ্টং
বিশ্বমায়ুর্ব্যশ্নুতং ক্রীড়ন্তৌ পুত্রৈঃ নপ্তৃভিঃ মোদমানৌ স্বীয়ে
গৃহে স্বাহা। ইদং সূর্য্যাসাবিত্র্যৈ। ২। ওঁ আস্নঃ প্রজাং
জনয়তু প্রজাপতিরাজরসা যা সমানা অর্য্যমা আদুর্মঙ্গলীঃ
পতিলোকমাবিশ শন্নো ভব দ্বিপদে শং চতুষ্পদে স্বাহা। ইদং
সূর্য্যাসাবিত্র্যৈ। ৩। ওঁ অঘোরচক্ষুরপতিঘ্ন্যেধি শিবা পশুভ্যঃ
সুমনাঃ সুবর্চ্চাঃ বীরসূর্দ্দেবকামা স্যোনা শন্নো ভব দ্বিপদে শং
চতুষ্পদে স্বাহা। ইদং সূর্য্যাসাবিত্র্যৈঃ। ৪। ওঁ ইমাং
ত্বমিন্দ্র মীঢ়্বঃ সুপুত্রান্ সুভগান্ কৃণু দশম্যাং পুত্রানধেহি
পতিমেকাদশং কৃধি স্বাহা। ইদং সূর্য্যাসাবিত্র্যৈ। ৫। ইতি
পঞ্চভির্ঋগ্‌ভিঃ প্রত্যেকং পঠিত্বা স্বাহান্তেন পঞ্চবারান্ হুত্বা
দশভির্ঋগ্‌ভির্হোমং কুর্য্যাৎ। যথা—ওঁ যস্ত্বাহৃদেত্যা

পূর্ব্ববৎ। ইদং সূর্য্যাসাবিত্র্যৈ। ১। ওঁ বহ্নৈ ত্বং স্কৃতে হৃদ্যুন্তে জাতবেদ ওঁ লোকমগ্নে কৃণবসোনাং। অশ্বিনং সুপুত্রিণং বীরবন্তং গোমন্তং রয়িং নাশ্মাত স্বাহা। ইদং সূর্য্যাসাবিত্র্যৈ। ২। ওঁ তুং ত্বামগ্নে পর্য্যবহং সূর্য্যাং বহতু না সহেত্যাদি। ইদং সূর্য্যাসাবিত্র্যৈ। ৩। ওঁ সোমোঽদদদ্ গন্ধর্ব্বায় ইত্যাদি। ইদং সূর্য্যাসাবিত্র্যৈ। ৪। ওঁ ইহৈবইত্যাদি। ইদং সূর্য্যাসাবিত্র্যৈ। ৫। ওঁ আত্মনঃ প্রজাং জনয়তু ইত্যাদি। ইদং সূর্য্যাসাবিত্র্যৈ। ৬। ওঁ অঘোরচক্ষুরপতি ইত্যাদি। ইদং সূর্য্যাসাবিত্র্যৈ। ৭। ওঁ ইমা ত্বমিন্দ্রমীঢবঃ ইত্যাদি। ইদং সূর্য্যাসাবিত্র্যৈ। ৮। ওঁ সম্রাজ্ঞি শ্বশুরে ভব সম্রাজ্ঞি শ্বশ্রু-বান্ ভব। ননন্দরি সম্রাজ্ঞি ভব অধিদেবৃষু স্বাহা। ইদং সূর্য্যাসবিত্র্যৈ। ৯। ওঁ সমঞ্জন্তু বিশ্বেদেবাঃ সমাপো হৃদয়ানি নৌ। সমাতরিশ্বা সন্ধাতা সংদেষ্ট্রী দধাতু নো স্বাহা। ইদং সূর্য্যাসাবিত্র্যৈ। ১০। ইত্যাদি দশভিঃ মন্ত্রৈঃ প্রত্যেকং চরু-হোমং কৃত্বা প্রজাপতিহোমং কুর্য্যাৎ। পুনরবদায়। ওঁ প্রজা-পতে নত্বদেতান্যন্যো বিশ্বজাতানি পরিতা বভুব। যৎকামাস্তে জুহুমস্তন্নোঽস্তু বয়ং স্যাম পতয়ো রয়ীণাং স্বাহা। ইদং প্রজাপতয়ে। ১। পুনরবদায়। ওঁ অদ্ভুন ইন্দ্রক্রুণতং চিত্রং গ্রাভং সংগৃভায় মহাহস্তী দক্ষিণেন স্বাহা ইদং গণপতয়ে। ২। পুনরবদায়। ওঁ তদ্বিষ্ণোঃ পরমং পদং সদা পশ্যন্তি সূরয়ঃ দিবীব চক্ষুরাততম্ স্বাহা। ইদং বিষ্ণবে। ৩। পুনরবদায়। ওঁ ধর্ম্মায় স্বাহা ইদং ধর্ম্মায়। ৪। ওঁ পিতৃভ্যঃ স্বাহা ইদং পিতৃভ্যঃ। ৫। ওঁ কুলদেবতাভ্যঃ স্বাহা ইদং কুলদেবতাভ্যঃ। ৬। ওঁ গুরুভ্যো স্বাহা ইদং গুরবে। ৭।

ওঁ অগ্নয়ে স্বাহা ইদং অগ্নয়ে। ৮। ওঁ সূর্য্যানাবিত্র্যৈ স্বাহা ইদং সূর্য্যানাবিত্র্যৈ। ৯। ওঁ অগ্নয়ে স্বাহা ইদমগ্নয়ে। ১০। ওঁ বায়বে স্বাহা ইদং বায়বে। ১১। ওঁ সূর্য্যায় স্বাহা ইদং সূর্য্যায়। ১২। ওঁ প্রজাপতয়ে স্বাহা ইদং প্রজাপতয়ে। ১৩। ওঁ সোমায় স্বাহা ইদং সোমায়। ১৪। ওঁ দ্যৌঃ স্বাহা ইদং দ্যৌঃ। ১৫। ওঁ পৃথিব্যৈ স্বাহা। ইদং পৃথিব্যৈ। ১৬। ওঁ ভূ স্বাহা ইদমগ্নয়ে। ১৭। ওঁ ভুবঃ স্বাহা ইদং বায়বে। ১৮। ওঁ স্বঃ স্বাহা ইদং সূর্য্যায়। ১৯। ওঁ ভূর্ভুবঃ স্বঃ স্বাহা ইদং অগ্নিবায়ুসূর্য্যেভ্যঃ। ২০। ওঁ অগ্নয়েস্বিষ্টিকৃতে স্বাহা ইদমগ্নয়ে স্বিষ্টিকৃতে। ২১। এবং চরুহোমং সমাপ্য সেক্ক-নয়ৌ নিক্ষিপ্যাজ্যহোমং কুর্য্যাৎ। তদ্যথা। ওঁ অহ্নন ইন্দ্রক্ষুনত' চিত্রং প্রাভং সংগৃভায় মহাহস্তী দক্ষিণেন ইতি মন্ত্রেণ উডুম্বরসমিদ্ভির্গণেশগ্য সঙ্কল্পপূর্ব্বকং অষ্টোত্তরশত-হোমঃ কার্য্যঃ। এবং প্রজাপত্যাদীনামপি। ততঃ ওঁ প্রজা-পতে নত্বদেতান্যন্যো বিশ্বাজাতানি পরিতাবভূব। যৎ-কামাস্তে জুহুমস্তন্নোস্তবয়ং শ্যামপতয়োরয়ীনামিতি মন্ত্রেণ পলাশসমিদ্ভিঃ প্রজাপতেরষ্টোত্তরশতহোমঃ কার্য্যঃ। ততঃ ওঁ তদ্বিষ্ণোরিতি মন্ত্রেণ উডুম্বরসমিদ্ভিঃ বিষ্ণোরষ্টোত্তর-শতহোমঃ। ততঃ ওঁ ধর্ম্মায় স্বাহা ইতি মন্ত্রেণ উডু-ম্বরসমিদ্ভিঃ ধর্ম্মস্যাষ্টোত্তরশতহোমঃ। ততঃ পিত্রাদি-দেবতানাং যথাশক্তি সমিদ্ধোমঃ কার্য্যঃ। ততো নবগ্রহানাং দিক্‌পালানাং প্রত্যক্ষদেবতাঞ্চ কেবলাজ্যেন প্রত্যেকমেকৈকাহুতিং জুহুয়াৎ। তত্রাদৌ নবগ্রহহোমঃ কার্য্যঃ। তদ্যথা ওঁ আ কৃষ্ণেন রজসা বর্ত্তমানো নিবেশয়ন্নমৃতং মর্ত্ত্যঞ্চ হির

ষেন সবিতা রথেনা দেবো যাতি ভুবনানি পশ্যন্ স্বাহা। ইদং সূর্য্যায়। ১। ওঁ আপ্যায়স্ব সমেতু তে বিশ্বতঃ সোমবিষ্ণুং ভবাবাযস্য সঙ্গতে স্বাহা ইদং সোমায়। ২। ওঁ অগ্নির্মূর্দ্ধাদিবঃ ককুৎপতিঃ পৃথিব্যা অয়মপাং রেতাংসি জিন্বতি স্বাহা। ইদং মঙ্গলায়। ৩। ওঁ অগ্নির্বিবস্বদুষসশ্চিত্রং রাধোমর্ত্ত্যা আদাসুষেজাতবেদো বহতু মাদ্যাদেবর্বি বুধঃ স্বাহা ইদং বুধায়। ৪। ওঁ বৃহস্পতে পরিদেয়া রথেন রক্ষোহামিত্রা অপবাধমানঃ প্রভঞ্জংসেনা প্রমণোযুধা বজ্রন্নস্মাকামধাবিতা রথানাং স্বাহা। ইদং বৃহস্পতয়ে। ৫। ওঁ শুক্রস্তেহন্য-দ্যজস্তেহন্যদ্বিশ্বরূপেঽহনী দ্যৌরিবাসে বিশ্বাহি মাবা অবসিস্ব-ধাবন্ ভদ্রা তে পুষন্নিহরাতিরস্ত স্বাহা। ইদং শুক্রায়। ৬। ওঁ শন্নো দেবীরভিষ্টয়ে আপো ভবন্তু পীতয়ে। শংয়োরভিস্রবন্তু নঃ স্বাহা। ইদং শনৈশ্চরায়। ৭। ওঁ কয়ানশ্চিত্র আভুবদূতী সদাবৃধঃ সখাকয়া সচিষ্টয়া বৃতা স্বাহা। ইদং রাহবে। ৮। ওঁ কেতুং কৃন্ন কেতবে পেশোমর্য্যা অপেশসে সমুনস্তিরজায়থাঃ স্বাহা। ইদং কেতুভ্যঃ। ৯। ততো দিক্-পালহোমঃ। ওঁ ত্রাতারমিন্দ্র সবিতারমিন্দ্রং হবে হবে সুহবং শূরমিন্দ্রং কয়ামি শক্রং পুরুহূতমিন্দ্রং স্বস্তিনো মঘবা ধাত্বিন্দ্র স্বাহা। ইদমিন্দ্রায়। ১। ওঁ বৈশ্বানরোন উভয়ং অধ্যাক্তাতু পরাবতঃ অগ্নিরুক্থেন বাহসা উপযাম গৃহীতোঽসি বৈশ্বানরায় বৈষতেযোনি র্বৈশ্বানরায় ত্বা স্বাহা। ইদমগ্নয়ে। ২। ওঁ অসি যমোঽস্যাদিত্যোঽর্ব্বন্নসি ত্রিতোগুহ্যেন ব্রতেন অসিসোমেন বিপৃক্ত আহুস্তে ত্রীণি দিবিবন্ধানি স্বাহা। ইদং যমায়। ৩। মস্তেদেবী নির্ঋতি রাবরন্ধপাশং গ্রীবাসিবদ্বিশ্রত্যং

তস্মৈবিশাম্যায়ুধোনমধ্যাদযৈতৎ পিত্রুমগ্নিপ্রসূতং নমো ভূত্যৈ যেদং চকার স্বাহা। ইদং নির্ঋতয়ে। ৪। বরুণোস্যোত্তম্ভনমসি বরুণস্য স্কম্ভঃ সর্জনীস্থো বরুণস্য ঋতে সদস্যসি বরুণস্য ঋতে সদনমসি বরুণস্য ঋতে সদনীমাসীদ স্বাহা। ইদং বরুণায়। ৫। ওঁ বাতো বামনো বা গন্ধর্ব্বাঃ সপ্তবিংশতি তেগ্রেহশ্ব-যুঞ্জংস্তেহস্মিন্ যবমাদধুঃ স্বাহা। ইদং বায়বে। ৬। ওঁ কুবিদং গবযমন্তো যবশ্চিদ্ যথা দন্তেনুপূর্ব্বং বিপূয় ইহেহৈষাং কৃণু হি ভোজনানিযেবা ইমোনম উক্তিং ন জগ্মুঃ স্বাহা। ইদং কুবেরায়। ৭। ওঁ তমীশানং জগৎপতি স্থবস্পাতিধিয়ং জিনমবসে হূমহে বয়ং পুষাণো যথা বেদনামসদ্বৃধে রক্ষিতাবো পায়ুরদব্ধঃ স্বস্তয়ে স্বাহা ইদমীশানায়। ৮। ওঁ আব্রহ্মণঃ ব্রহ্মণো ব্রহ্মবর্চ্চসী জায়তা মারাষ্ট্রে রাজন্যঃ শূর ইহ ব্যোত্তী মহারথো জায়তাং স্বাহা ইদং ব্রহ্মণে ৯। ওঁ নমোহস্তু সর্পেভ্যো যে কে চ পৃথিবীমনু যেহন্তরীক্ষে যে দিবি তেভ্যঃ সর্পেভ্যঃ স্বাহা, ইদমনন্তায়। ১০। ততঃ প্রত্যক্ষদেবতাহোমঃ কার্য্যঃ। ওঁ বাস্তুদেবতাভ্যঃ স্বাহা, ইদং বাস্তুদেবতাভ্যঃ। ওঁ গ্রামদেবতাভ্যঃ স্বাহা ইদং গ্রামদেবতাভ্যঃ। ওঁ গঙ্গাদিনদীভ্যঃ স্বাহা ইদং গঙ্গাদিনদীভ্যঃ। ওঁ লোহিতাদিনদেভ্যঃ স্বাহা ইদং লোহিতাদিনদেভ্যঃ।ওঁ সমুদ্রেভ্যঃ স্বাহা ইদং সমুদ্রেভ্যঃ। ওঁ সর্ব্বেভ্যো দেবেভ্যঃ স্বাহা ইদং সর্ব্বেভ্যঃ দেবেভ্যঃ। ওঁ সর্ব্বাভ্যো দেবীভ্যঃ স্বাহা ইদং সর্ব্বাভ্যো দেবীভ্যঃ। ততো ব্যস্তসমস্তমহাব্যাহৃতিহোমঃ। ওঁ ভূঃ স্বাহা ইদমগ্নয়ে। ওঁ ভুবঃ স্বাহা ইদং বায়বে। ওঁ স্বঃ স্বাহা ইদং সূর্য্যায়। ওঁ ভূর্ভুবঃ স্বঃ স্বাহা ইদং প্র

বায়ুসূর্য্যেভ্যঃ। ততঃ প্রায়শ্চিত্তহোমং কুর্য্যাৎ। আদৌ সংকল্পং কুর্য্যাৎ। অদ্যেত্যাদি শ্রীঅমুকগোত্রঃ শ্রীঅমুকদেবশর্ম্মা অমুকগোত্রস্য শ্রীঅমুক দেবশর্ম্মণঃ সঙ্কল্পিত-পুত্রপ্রতিগ্রহাঙ্গহোমকর্ম্মণি যদ্বৈগুণ্যং জাতং তদ্দোষপ্রশমনায় ওঁ ত্বন্নো অগ্নে ইত্যাদি পঞ্চভি র্মন্ত্রৈঃ প্রায়শ্চিত্তহোমকর্ম্মাহং করিষ্যামি ইতি সঙ্কল্প্য তৎসূক্তং পঠিত্বা অগ্নে ত্বং বিধুনানামাসীতি নাম কৃত্বা ধ্যাত্বাবাহ্য সংপূজ্য হবির্নৈবেদ্যং দত্বা জুহুয়াৎ। ত্বং নো অগ্নে ইত্যস্য বামদেবঋষিরনুষ্টুপ্ ছন্দোঽগ্নীবরুণৌ দেবতে আজ্যহোমে বিনিয়োগঃ। ওঁ ত্বং নো অগ্নে বরুণস্য বিদ্বান্ দেবস্য হেলো অবযাসিসীষ্ঠা যজিষ্ঠো বহ্নিতমঃ শোশুচানো বিশ্বাদেষাংসি প্রমুমুগ্ধ্যস্মৎ স্বাহা। ইদমগ্নীবরুণাভ্যাং। ১। ওঁ স ত্বং নো অগ্নেঽবমো ভবোতী নেদিষ্ঠো অস্যা উষসো ব্যুষ্টৌ। অবযক্ষ্ব নো বরুণোরবাণো বীহিমৃলীকং সুহবো ন এধি স্বাহা। ইদমগ্নীবরুণাভ্যাং। ২। অযাশ্চাগ্নেইত্যস্য প্রজাপতিঋষি পংক্তিচ্ছন্দো অগ্নির্দেবতা আজ্যহোমে বিনিয়োগঃ। ওঁ অযাশ্চাগ্নেস্যনভিঃ শস্তিপশ্চসত্যমি ত্বময়া অসি অয়ানো যজ্ঞং বহাস্যয়া নো ধেহি ভেষজং স্বাহা। ইদমগ্নয়ে। যে তে শতমিত্যস্য শুনঃ শেফঋষিঃ পংক্তিচ্ছন্দোঽগ্নিবরুণাদয়ো দেবতা আজ্যহোমে বিনিয়োগঃ। ওঁ যে তে শতং বরুণ যে সহস্রং যজ্ঞিয়াঃ পাশা বিততা মহান্তঃ তেভির্নোঽদ্য সবিতো ত বিষ্ণুর্বিশ্বে মুঞ্চন্তু মরুতঃ স্বর্কাঃ স্বাহা। ইদং বরুণায়। সবিত্রে বিষ্ণবে বিশ্বেভ্যো দেবেভ্যঃ মরুদ্ভ্যঃ স্বর্কেভ্যঃ। উদুত্তমমিত্যস্য শুনঃ শেফঋষিস্ত্রিষ্টুপ্ছন্দো বরুণো দেবতা

আজ্যহোমে বিনিয়োগঃ। ওঁ উদুত্তমং বরুণপাশমস্মদবাধমং বিমধ্যমং শ্রথায় অথাবয়মাদিত্য ব্রতে তবানাগসো অদিতয় স্যামঃ স্বাহা। ইদং বরুণায়। ৫। ততঃ স্রুবং প্রাশ্য আচম্য পবিত্রেণ প্রোক্ষণীজলেন শিরঃপ্রভৃতিমার্জ্জনং। সুমিত্রানাপ ওষধয়ঃ সন্তু ইতি শিরসি ওঁ দুর্ম্মিত্রানাপ ওষধয়ঃ সন্তু ইত্যধঃ। ওঁ যোহস্মান্ দ্বেষ্টি যঞ্চ বয়ং দ্বিষ্ম ইতি মন্ত্রেণ প্রোক্ষণীপাত্রং ন্যুব্জীকুর্য্যাৎ। ততস্তবগক্রমেন বর্হিরুত্থাপ্য ওঁ দেবাগাতু বিদোগাতু মিত্রাগাতু মিতবনস্পতে ইদং বেদজ্জং স্বাহা। বাতেধা স্বাহা ইতি মন্ত্রেণ ঘৃতেনাভিষিচ্যাগ্নৌ জুহুয়াৎ। ততঃ পূর্ণহোমং কুর্য্যাৎ। অগ্নে ত্বং মৃডনামাসীতি নাম কৃত্বা ধ্যাত্বাবাহ্য গন্ধপুষ্পাদিভিঃ সংপূজ্য ফলতাম্বুলাদিসহিতং ঘৃতপূরিতপাত্রং গ্রহীত্বা যজমানসহিতং উত্থায় ওঁ মূর্দ্ধানন্দিবো রতিং পৃথিব্যা বৈশ্বানরমৃত আয়াতমগ্নিং কবিং সম্রাজ-মতিথিং জনানামাসন্নপাত্রং জনয়ন্ত দেবাঃ স্বাহা। ইদমগ্নয়ে। ততো ব্রহ্মদক্ষিণাং পূর্ণপাত্রং তদভাবে পূর্ণপাত্রানুকল্পভোজ্যং ব্রহ্মণে দদ্যাৎ। যথা অদ্যেত্যাদি অমুকগোত্রঃ শ্রীঅমুক-দেবশর্ম্মা অমুকগোত্রস্য শ্রীঅমুকদেবশর্ম্মণঃ সকল্পিতপুত্র-প্রতিগ্রহাঙ্গহোমকর্ম্মণি ব্রহ্মকর্ম্মপ্রতিষ্ঠার্থং পূর্ণপাত্রং পূর্ণপাত্রা-নুকল্পভোজ্যং শ্রীবিষ্ণুদৈবতং অমুকগোত্রায় শ্রীঅমুকায় ব্রহ্মণে তুভ্যমহং সম্প্রদদানি। ব্রহ্মণে দক্ষিণাং দত্ত্বা অগ্নে ত্বং সমুদ্রং গচ্ছ। পৃথ্বী ত্বং শীতলা ভব ইত্যগ্নিং বিসৃজ্য স্রুবলগ্নভস্মনা তিলকং দদ্যাৎ। ওঁ কশ্যপস্য ত্র্যায়ুষং ইতি ললাটে, ওঁ যদ্দে-বানাং ত্র্যায়ুষং ইতি কণ্ঠে। ও তন্মেঽস্তু ত্র্যায়ুষং ইতি স্কন্ধে ওঁ তন্মেঽস্তু ত্র্যায়ুষং ইতি বাহ্বোঃ। ততো দক্ষিণাং দদ্যা

যথা। অদ্যেত্যাদি মৎসংকল্পিত-পুত্র-প্রতিগ্রহাঙ্গহোমকর্ম্মণি হোত্রাদিকর্ম্মপ্রতিষ্ঠার্থং ইমাং সবস্ত্রাং ধেনুং সুবর্ণং তন্মূল্যংবা শ্রীবিষ্ণুদৈবতং অমুকগোত্রায় শ্রীঅমুকদেবশর্ম্মণে হোত্রে তুভ্যমহং সম্প্রদদে ইত্যুৎসৃজ্য দদ্যাৎ। দক্ষিণায়াং বিশেষঃ। ব্রাহ্মণো যথাশক্তি। রাজা তু অৰ্দ্ধরাজ্যোৎপন্নমেকবর্ষীণ-দ্রব্যং, বৈশ্যঃ সুবর্ণরজততাম্রাদীনাং ত্রিংশৎমাসক-পরিমিতাংশং। শূদ্রস্তু একবর্ষীয়ভৃতিলব্ধধনং। অশক্তাশ্চেৎ সর্ব্বেঽপি যথাশক্তি দদ্যুঃ। ততঃ ব্রহ্মণে, আচার্য্যায়, সদস্যায় চ দক্ষিণাং দদ্যাৎ। ততো মূলদক্ষিণাং সুবর্ণং তন্মূল্যং বা দদ্যাৎ। ততোঽচ্ছিদ্রাবধারণং কুর্য্যাৎ। ততো বৈগুণ্যসমাধানার্থং বিষ্ণুং স্মরেৎ। ততঃ শান্ত্যাশীর্ব্বাদং কৃত্বা নৃত্যগীতবাদ্যাদিভিরুৎসবং কৃত্বা গৃহং প্রবিশেৎ। ততো ব্রাহ্মণান্ বন্ধূন্ জ্ঞাতীন্ ভোজয়েৎ। ইতি বৌধায়নোক্ত-পুত্র-প্রতিগ্রহ-প্রয়োগবিধিঃ সমাপ্তঃ।

---

